चिक्कणशीर्षस्य आरण्यकस्य हस्ते पतिष्यति । ) [ 63]

**राजा–** परवती खलु तत्रभवती, न च सन्निहितगुरुजना । [ 64]

**विदूषकः–** अध भवन्तं अन्तरेण कीदिसो से चित्ताणुराओ । ( अथ भवन्तम् अन्तरेण कीदृशोऽस्याश्चित्तानुरागः । ) [ 65]

**राजा–** सखे, स्वभावाद् अप्रगल्भस्तपस्विकन्यकाजनः । तथापि तु –

अभिमुखं मयि संहृतमीक्षितं
हसितमन्यनिमित्तकथोदयम् ।
विनयबाधितवृत्तिरतस्तया
न विवृतो मदनो, न च संहृतः ।। **2 – 10** ।। [ 66]

**विदूषकः–** ( विहस्य )किं खु सा भवदो दिट्ठमेत्तस्स य्येव अङ्कं आरुहदु । ( किं खलु सा भवतो दृष्टमात्रस्यैवाङ्कमारोहतु । ) [ 67]

**राजा–** सखे, सखीभ्यां मिथः प्रस्थाने शालीनयापि तत्रभवत्या मयि भूयिष्ठम् आविष्कृतो भावः ।

तदा खलु –[68]

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिद् एव पदानि गत्वा ।
आसीद् विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलम् असक्तमपि द्रुमाणाम्[16] ।। **2 – 11** ।। [ 69]

**विदूषकः–** भो गिहीदपाधेओ होसि । कधं पुणोउण तवोवणगमणं त्ति पेक्खामि । ( भोः गृहीतपाथेयो भवसि । कथं पुनः पुनस्तपोवनगमनमिति प्रेक्षे । ) [ 70]

**राजा–** सखे, चिन्तय तावत् केनोपायेन पुनराश्रमपदं गच्छामः । [ 71 ]

**विदूषकः -** एसो चिन्तेमि । मा खु से अलिअपरिदेविदेहिं समाधिं भञ्जिहिसि । ( एषश्चिन्तयामि, मा खल्वस्यालीकपरिदेवितैः समाधिं भाङ्क्षीः[17] । )( चिन्तयित्वा ) भो को अण्णो उपाओ,
णं भवं राआ । ( भोः कोऽन्य उपायो, ननु भवान् राजा । ) [ 72 ]

**राजा–** ततः किम् । [ 73]

**विदूषकः–** णिवारच्छब्भाअं दाव सामिणो उवहरदु त्ति । ( निवारषड्भागं तावत् स्वामिने उपहरत्विति ) [ 74]

**राजा–** मूर्ख, अन्यं भागम् एते रक्षिणे निर्वपन्ति, रत्नराशीन् अपि विहायाभिनन्द्यम् । पश्य, [75]

यद् उत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तत् फलम् ।
तपष्षड्भागम् अक्षय्यं ददात्यारण्यको जनः ।। **2 – 12** ।। [ 76]

( **नेपथ्ये** ) हन्त, सिद्धार्थौ स्वः । [ 77]

**राजा–** ( कर्णं दत्वा ) अये धीरप्रशान्तस्वरैस्तपस्विभिर् भवितव्यम् । [ 78]

---

[16]एभिः शब्दैः प्रथमांकस्यान्ते शकुन्तलायारुक्तिः समर्थिता भवति । तत्र शकुन्तला न केवलमाङ्गिकाभिनयेन रंगान्निष्क्रमणं करोति । किन्तु वाचिकाभिनयपूर्वकमेव तस्या रंगान्निष्क्रमणं भवतीत्यनेन श्लोकेन सिध्यति ।
[17]विक्रमोर्वशीयेऽपि द्वितीयाङ्क एतादृशैरेव शब्दैः समाधिमभिनयति, नायिकाप्राप्त्युपायं च चिन्तयति ।

( प्रविश्य ) **दौवारिकः**– जअदु जअतु भट्टा । एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा । ( जयतु, जयतु भर्ता । एतौ द्वावृषिकुमारकौ प्रतिहारभूमिम् उपस्थितौ । ) [ 79 ]

**राजा**–अविलम्बितं प्रवेशय । [ 80 ]

**दौवारिकः**– अअं पवेसामि । ( अयं प्रवेशयामि । ) ( इति निष्क्रान्तः ) [ 81]

( ततः प्रविशतस्तापसौ दौवारिकश्च । ) [ 82 ]

**दौवारिकः**–इदो इदो भवन्तो । ( इत इतो भवन्तः । ) [ 83 ]

**तापसौ**–( राजानं दृष्ट्वा ) अहो दीप्तिमतोऽपि विश्वसनीयता वपुषः । अथवा, उपपन्नमेतद् अस्मिन्नृषिकल्पे राजनि । तथाहि, [84]

अध्याक्रान्ता वसतिरमुनाऽप्याश्रमे सर्वपूर्वे
रक्षायोगाद् अयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्वः ।। **2 – 13** ।। [85]

**द्वितीयः**– गौतम, अयं स बलभित्सखो दुष्यन्तः । [ 86 ]

**प्रथमः**– अथ किम् । [ 87 ]

**द्वितीयः**–तेन हि,

नैतच्चित्रं यदयमुदधिश्यामसीमां धरित्रीम्,
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते सुर-समितयस्सक्तवैरा हि दैत्यैर्
अस्याधिज्ये धनुषि विजयं पौरहूते च वज्रे ।। **2 – 14** ।। [88]

**उभौ**–( उपसृत्य ) स्वस्ति भवते । ( फलान्युनयतः ) [ 89]

**राजा**–( सादरम् उत्थाय ) अभिवादये भवन्तौ । [91 ]

( सप्रणामं गृहीतासन उपविश्य ) किमाज्ञापयतो भवन्तौ । [ 92]

**ऋषिः**–विदितो भवान् आश्रमवासिनाम् इहस्थः । तेन भवन्तम् अभ्यर्थयन्ते । [ 93 ]

**राजा**–किमाज्ञापयन्ति । [ 94 ]

**उभौ**–तत्रभवतः कण्वमुनेरसांनिध्याद् रक्षांसि परापतिष्यन्ति, विघ्नमुत्पादयितुम् इच्छन्ति । तत्कतिपयरात्रं सारथिद्वितीयेन भवता सनाथीक्रियताम् आश्रम इति । [ 95 ]

**राजा** - अनुगृहीतोऽस्मि । [ 96 ]

**विदूषकः**–( अपवार्य ) इअं दाणिं अणुऊल-गलत्था[18] । ( इयमिदानीम् अनुकूलप्रार्थना । ) [ 97]

**राजा**–रेवक, मद्वचनाद् उच्यतां सारथिः । सबाणकार्मुकं रथम् उपनयेति । [ 98 ]

**दौवारिकः**–जं भट्टा आणवेदि । ( यद् भर्ताऽऽज्ञापयति । ) ( इति निष्क्रान्तः ) [ 99 ]

**ऋषिः**–( सहर्षम् )

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।

---

[18]देश्य-शब्दोऽयं प्रार्थनार्थक इति "पाइअ-सद्द-महण्णवो"( पृ. 437 ) कोशाज्ज्ञायते । अतः सः संरक्षणीयः ।

आपन्नाभयसत्रेण दीक्षिताः खलु पौरवाः ।। **2 – 15** ।। [ 100 ]

**राजा–** गच्छतां भवन्तौ । अहम् अप्यनुपदम् आगत एव । [ 101 ]

**ऋषिः–** विजयस्व । ( इत्युत्थाय निष्क्रान्तौ ) [ 102 ]

**राजा–** माधव्य, अप्यस्ति शकुन्तलादर्शनकौतुकम् । [ 103 ]

**विदूषकः–** पढमं अपरिबाधं आसि । ( सभयम् ) रक्खसवुत्तान्तेण उण सम्पदं विसाददंसिणा विसेसिदम् । ( प्रथमं अपरिबाधमासीत् । राक्षसवृत्तान्तेन पुनस्साम्प्रतं विषाददर्शिना विशेषितम् । ) [104]

**राजा–** मा भैषीः । ननु मत्समीपे भविष्यसि । [105]

**विदूषकः–**एस चक्काकी भूदो म्हि । ( एषः चक्राकी भूतोऽस्मि । ) [ 106 ]

( प्रविश्य ) **दौवारिकः–** भट्टा, सज्जो रहो भट्टिणो विजअपत्थाणं उदीक्खदि । एसो उण णअरादो देवीणं सआसादो करभओ उपत्थिदो । ( भर्तः, सज्जो रथो, भर्तुर्विजयप्रस्थानम् उदीक्षते । एष पुनर्नगरतो देवीनां सकाशतः करभकः उपस्थितः । ) [ 107 ]

**राजा–** सादरम् । किमज्जुभिः प्रेषितः । [ 108 ]

**दौवारिकः–** अध इं । ( अथ किम् ) । [ 109 ]

**राजा–** प्रवेश्यताम् । [ 110 ]

**दौवारिकः–** जं भट्टा आणवेदि । ( यद् भर्ताज्ञापयति ) ( इति निष्क्रान्तः ) [ 111 ]

।। ततः प्रविशति दौवारिकेण सह करभकः ।। [ 112 ]

**करभकः–** ( उपसृत्य ) जयदु जयदु भट्टा । देविओ आणवेन्ति, जधा आगामिणि चउत्थे दिअसे पुत्तपिण्डओ-दाणओ णाम उववासो भविस्सदि । तत्थ दीहाउणा अवस्संसण्णिहिदेण होदव्वम् । ( जयतु जयतु भर्ता । देव्य आज्ञापयन्ति यथागामिनि चतुर्थे दिवसे पुत्रपिण्डकदानको[19] नामोपवासो भविष्यति । तत्र दीर्घायुषाऽवश्यं सन्निहितेन भवितव्यम् । ) [ 113 ]

**राजा–** साकुलम् । माधव्य, इतस्तपस्विकार्यम् इतो गुरुजनाज्ञा । उभयमपि अनुल्लङ्घनीयं मया । कथमत्र प्रतिविधेयम् । [ 114 ]

**विदूषकः–** तिसङ्कु विअ अन्तरे चिट्ठ । ( त्रिशङ्कुरिवान्तरे तिष्ठ । ) [ 115 ]

**राजा–** सत्यम् आकुलोऽस्मि । [116]

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैले स्रोतस्स्रोतोवहो यथा ।। **2 – 16** ।। [ 117 ]

( सखेदं चिन्तयित्वा ) सखे माधव्य, त्वमज्जुभिः पुत्र इति परिगृहीतस्तद्भवान् इतः प्रतिनिवृत्य, तत्रभवतीनां पुत्रकार्यम् अनुष्ठातुमर्हति । तपस्विकार्यव्यग्रितास्स्मः इत्यावेदय ।[118 ]

**विदूषकः–** ( सगर्वम् ) साधु,रक्खसभीरुअं मं गणयिसदि । ( साधु, राक्षसभीरुकं मां गणयिष्यति । ) [119]

**राजा–** ( सस्मितम् ) महाब्राह्मण[20], कथमेतद् भवति सम्भाव्यते । [ 120 ]

---

[19]नाटकस्यारम्भ एव चक्रवर्तिनः पुत्रस्य प्राप्तिर्भविष्यतीत्याशीर्वचनं प्रदत्तम् । तच्च नाटकस्य चरमं लक्ष्यम् इत्यभिनवगुप्तपादाः । ( ना. शा. अभिनवभारती, अ.19-22 ), अतः प्रत्येकस्मिन् अङ्के पुत्रप्राप्तिरूपं लक्ष्यं स्मार्यते । तेनायमेव पाठः स्वीकार्यः । न च "प्रवृत्तपारणो नाम0" अथवा "निर्वृतपारणो नाम0" इति ।

[20]मालविकाग्निमित्रे ( अंकः-2 ) गणदासेनापि विदूषकं संबोद्धुं शब्दोऽयं प्रयुज्यते ।

**विदूषकः–** तेण हि जधा राआणुराजेण गन्तव्वं तधा गमिस्सं । ( तेन हि राजानुराजेन गन्तव्यम्, तथा गमिष्यामि । ) [ 121 ]

**राजा–**ननु तपोवनोपरोधः परिहरणीय इति सर्वम् अनुयात्रिकजनम् त्वया सह प्रस्थापयामि । [123]

**विदूषकः–** ( सगर्वम् ) तेण हि, जुअराआ खु अम्हि संवुत्तो । ( तेन हि, युवराजः खल्वस्मि संवृत्तः । )[124]

**राजा–** ( आत्मगतम् ) चपलोऽयं बटुः । कदाचिद् अस्मत्प्रार्थनाम् अन्तःपुरेभ्यः कथयेत् । भवतु, एवं तावद् वक्ष्यामि । ( प्रकाशम् ) ( विदूषकं हस्ते गृहीत्वा ) वयस्य, ऋषिगौरवाद् आश्रमं गच्छामि । न खलु सत्यमेव तापसकन्यकायाम् ममाभिलाषः ।[125]

पश्य,

क्व वयं क्व परोक्षमन्मथो<br>
मृगशावैस्समम् एधितो जनः ।<br>
परिहासविकल्पितं सखे<br>
परमार्थेन न गृह्यते वचः ।। **2 – 17** ।। [ 126 ]

**विदूषकः–** एवम् णेदं । सोत्थि भवदे ।, ( एवमेतत् । स्वस्ति भवते । )[ 127 ]

**( इति निष्क्रान्तास्सर्वे ।। )**[128]

**।। इति द्वितीयोऽङ्कः ।।**

**।। अथ तृतीयोऽङ्कः ।।**

( ततः प्रविशति यजमानशिष्यः । ) [1]

**शिष्यः –** ( कुशान् आदाय ) अहो महाप्रभावो दुष्यन्तः । प्रविष्टमात्र एव सारथिद्वितीये तत्रभवतीदम् आश्रमपदं निवृत्तरक्षोविघ्नं संवृत्तम्, निरुपप्लवानि च नः कर्माणि सिद्धानि । [2 ]

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषस्स हि विघ्नान् अपोहति ।। **3 –1** ।। [ 3 ]

यावदिमान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि । ( परिक्रम्याकाशे ) प्रियंवदे, कस्येदम् उशीरानुलेपनं मृणालवलयवन्ति च कमलिनीपत्राणि नीयन्ते । ( श्रुतिमभिनीय ) किं ब्रवीषि । आतपलङ्घनाद् बलवद् अस्वस्था शकुन्तला । तस्या दाहे निर्वापणायेति । अहो यत्नाद् उपक्रम्यतां सखी, यतस्तत्रभवतः कुलपतेस्तद् उच्छ्वसितम् । अहमपि वैतानिक-शान्त्युदकम् अस्यै गौतमीहस्ते प्रहेष्यामि । ( इति निष्क्रान्तः ) [4 ]

**।। प्रवेशकः**[1] ।। [ 5]

( ततः प्रविशति कामयानावस्थो[2] राजा ) [6]

**राजा –** ( सवितर्कम् ) जाने तपसो वीर्यं सा बाला परवतीति मे विदितम् ।
अलमस्मि ततो हृदयं तथापि नेदं निवर्तयितुम्[3] ।। **3 – 2** ।। [ 7 ]

( सासूयम् ) कुसुमायुध, त्वया चन्द्रमसा च विश्वसनीयाभ्यामभिसन्धीयते कामिजनसार्थः । कथमिति । [8]

तव कुसुमशरत्वं शीतरश्मित्वमिन्दो-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निम् इन्दुर्मयूखै-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ।। **3 – 3** ।। [ 9 ]

अथवा,

अनिशमपि[4] मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरति[5] ।। **3 – 4** ।। [10]

( सखेदम् ) क्व नु खलु संस्थिते कर्मणि सदस्यैरनुज्ञातविश्रान्तिः श्रान्तम् आत्मानं विनोदयामि । ( निःश्वस्य ) किं नु खलु प्रियादर्शनाद् ऋते शरणम् अन्यत् । यावदेनाम् अन्विष्ये । ( सूर्यम् अवलोक्य ) इमाम् उग्रतमां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु तत्रभवती ससखीजना गमयति । तत्रैव तावद् गमिष्यामि[6] । [ 11 ]

( परिक्रम्य साह्लादं वायुस्पर्शं निरूपयन् )

अहो, प्रवातसुभगोऽयमुद्देशः । [12]

---

[1] अर्थोपक्षेपकस्यास्य नामाभिधानं नाट्यशास्त्रानुसारि । बृहत्पाठपरम्परायामपीदमेव नाम संचरितम् ।
[2] कामयानशब्दः सिद्धोऽनादिश्चेत् । इति वामनस्य का.सू.वृत्तौ 5-82, रघुवंशे 19-50 इत्यत्र च प्रयुक्तः ।
[3] का.-मै.-बं.-पाठेष्वितः परम् "अद्यापि नूनं हरकोपवह्निर0" इति । 3-26 श्लोकानुरोधात् पुनरुक्तिग्रस्तोऽयं श्लोकः । अतः प्रक्षिप्तः सिध्यति । ( प्रक्षिप्त-श्लोक-संख्या-8 )
[4] काश्मीर-पाठात् संक्षेपीकरणस्याशयात् निष्कासितोऽप्ययं श्लोकः मैथिल-पाठानुरोधात् स्वीक्रियते । अत्र "अथवे"ति निपातेनावतारितेऽस्मिन् श्लोके पक्षान्तरमपि प्रस्तूयते, तेनास्य श्लोकस्य मौलिकत्वं सिध्यति ।
[5] मै.-बं.-पाठयोरितः परं "वृथैव संकल्पशतैरजस्रमनङ्ग0" । ( प्रक्षिप्त-श्लोक-संख्या-9 )
[6] मै.-बं.-पाठयोरितः परं "संमीलन्ति न तावद् बन्धनकोशाः0" इति । "नादत्ते प्रियमण्डनापि0" इति वक्ष्यमाणेन वचनेन सहास्य श्लोकस्य विरोधादयं श्लोकः प्रक्षिप्तः सिध्यति । ( प्रक्षिप्त-श्लोक-संख्या- 10 )

शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम् ।
मदनग्लानैरङ्गैः पीडितमालिङ्गितुं पवनः ।। **3 – 5** ।। [ 13 ]

( परिक्रम्यावलोक्य च ) अस्मिन् वेतसपरिक्षिप्ते लतामण्डपके शकुन्तलया भवितव्यम् । तथा हि , ( अधोऽवलोक्य ) [14]

अल्पनिहिता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ।। **3 – 6** ।। [ 15 ]

यावद्विटपान्तरेणावलोकयामि । ( तथा कृत्वा सहर्षम् ) अये, लब्धं खलु नेत्रनिर्वापणम्[7] । एषा मनोरथभूमि-प्रियतमा मे सकुसुमास्तरणं शिलापट्टमधिशयाना[8] सखीभ्याम् अन्वास्यते । भवतु । लताव्यवहितः श्रोष्यामि यावदासां विस्रब्धकथितानि । ( तथा कुर्वन् स्थितः ) [16]

( ततः प्रविशति यथा निर्दिष्टा शकुन्तला सख्यौ च ) [ 17 ]

**सख्यौ –** ( उपवीज्य सस्नेहम् ) सहि सउन्तले, अवि सुहाअदि दे णलिणीपत्तवादो । ( सखि शकुन्तले, अपि सुखायते ते नलिनीपत्रवातः । ) [ 18 ]

**शकुन्तला –**( वेदनां नाटयित्वा ) किं वा वीजअन्ति, मं सहीओ । ( किं वा वीजयतः, मां सख्यः । ) [19]

( उभे सविषादं मुखम् अन्योन्यं पश्यतः । ) [ 20 ]

( शकुन्तला सखेदं निश्श्वसिति । ) [ 21]

**राजा –** बलवदस्वस्था खल्वत्रभवती । ( सवितर्कम् ) किमत्रायमातपदोषः स्याद्, उत यथा मे मनसि वर्तते । ( साभिलाषं निर्वर्ण्य ) अथवा कृतं सन्देहेन । [22]

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु ।। **3 – 7** ।। [ 23 ]

**प्रियंवदा –**( जनान्तिकम् ) अणुसूए, तस्स राएसिणो पढमदंसणादो आरभिअ पज्जुस्सुअमणा सउन्तला । ण खु से अण्णणिमित्तो आदङ्को भवे । ( अनुसूये, तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्युत्सुकमनाः शकुन्तला । न खल्वस्याः अन्यनिमित्त आतङ्को भवेत् । ) [24]

**अनुसूया –** ममावि एरिसी आसङ्का । भोदु । पुच्छस्सं । सहि पुच्छिदव्वा सि किं पि । बलीओ खु अङ्ग-संतावो । ( ममापि ईदृश्याशङ्का । भवतु । प्रक्ष्यामि । सखि, प्रष्टव्यासि किमपि । बलीयान् खल्वङ्गसन्तापः[9] । ) [25]

**शकुन्तला –** ( पूर्वार्धेन शयनादुत्थाय ) हला, भण जं वत्तुकामासि । ( सखि, भण यद् वक्तुकामासि । )[10] [26]

**अनसूया –** हला सउन्तले, अनन्तरण्णा अम्हे मअणगदस्स वुत्तन्तस्स । तहावि जादिसी इदिहास-गदेसु मअणवुत्तन्तेसु कामअमाणस्स अवत्था सुणीअदि तादिसं च लक्खम्ह । ता कहेहि किं णिमित्तं दे अअं आआसो, विआरं खु परमत्थदो अआणिअ अणारम्भो पडीआरस्स । ( हला शकुन्तले, अनन्तरज्ञा वयं मदनगतस्य वृत्तान्तस्य । तथापि यादृशीतिहासगतेषु

---

[7] कृतिनिष्ठान्तरिकप्रमाणेन समर्थितः । यथा- विष्कम्भक एवोक्तम् "तस्याः शरीरदाहे निर्वापणाये"ति । तथा चाग्रे नायको भणिष्यति- "स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः" (3-10) इति ।

[8] रंगभूमौ नायिकायाः शयनावस्था निरूप्यते, सा च "अङ्के निधाय चरणावुत पद्मताम्रौ0" (3-20) पर्यन्तं प्रवर्तते । दीर्घकालपर्यन्तं प्रवर्तनीया सेति कविसंकल्पिता दृश्य-योजना ।

[9] इतः परं राज्ञो मुखे "शशिकरविशदान्यस्यास्तथे"ति श्लोकः बंगीय-पाठे प्राप्यते ।, ( प्रक्षिप्त-श्लोक-संख्या-11 )

[10] अयम् ( उक्ति-क्रमांकाः 24-26 ) पाठ्यांशो बंगीय-पाठात् गृहीतः । काश्मीर-मैथिल-पाठयोर्न विद्यते पाठ्यांशोऽयमिति । यद्यपि तत्र "शशिकरविशदानी"ति श्लोकस्तु प्रक्षिप्त इति पूर्वं कथितं, तदवधेयम् ।

मदनवृत्तान्तेषु कामयमानस्यावस्था श्रूयते तादृशञ्च लक्षावहे । तत्कथय, किं निमित्तं तेऽयम् आयासो, विकारं खलु परमार्थतोऽज्ञात्वाऽनारम्भः प्रतिकारस्य । ) [27]

**राजा** – अनसूययाप्यनुगतो मदीयस्तर्कः । [ 28 ]

**शकुन्तला** – ( आत्मगतम् ) बलवं च मे अहिणिवेसो । ण अ सक्कणोमि सहसा णिवट्टिदुम् । ( बलवान् च मेऽभिनिवेशः । न च शक्नोमि सहसा निवर्तितुम् । ) [ 29]

**प्रियंवदा** – सहि, सुट्ठु एसा भणादि । किं णेदं अत्तणो उवद्दवं निगूहसि । अणुदिअसं च परिहीअसे अङ्गेहिं । केवलं लावण्णमई च्छाआ तुमं ण मुञ्चदि । ( सखि, सुष्ठ्वेषा भणति । किमेतमात्मन उपद्रवं निगूहसि । अनुदिवसं च परिहीयसेऽङ्गकैः । केवलं लावण्यमयीच्छाया त्वां न मुञ्चति । ) [30]

**राजा** – अवितथमाह प्रियंवदा । तथा ह्यस्याः – [31]

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं
मध्यं कान्ततरं प्रकामविनतावंसौ छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ।। **3 – 8** ।। [ 32 ]

**शकुन्तला** – कस्स वा अण्णस्स इदं कधइदव्वं । आआसइत्ति दाणिं वो भविस्सं । ( कस्य वान्यस्येदं कथयितव्यम् । आयासयित्रीदानीं वो भविष्यामि । ) [ 33 ]

**उभे** – अदो य्येव णो णिब्बन्धो । संविभत्तं खु दुःखं सज्झवेअणं होदि । ( अत एव नो निर्बन्धः । संविभक्तं खलु दुःखं सह्यवेदनं भवति । ) [ 34 ]

**राजा** –

पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सहावम्
अत्रोत्तरं श्रवणकातरतां गतोऽस्मि ।। **3 – 9** ।। [ 35 ]

**शकुन्तला** – ( सलज्जम् ) जदो पहुदि सो तवोवणरक्खिदा राएसि मम दंसणपधं गदो,.....। ( यतः प्रभृति स तपोवनरक्षिता राजर्षिः मम दर्शनपथं गतः ..... । ) [36]

( इत्यर्धोक्तेन लज्जां नाटयति ) [37]

**उभे** – कधेदु पिअसही । ( कथयतु प्रियसखी । ) [38]

**शकुन्तला** – तदो आरभिअ तग्गदेण अहिलासेण एदावत्थ म्हि संवुत्ता । ( तत आरभ्योद्गतेनाभिलाषेण एतदवस्थास्मि संवृत्ता । ) [ 39 ]

**उभे** – दिठ्ठिआ, दाणिं दे अणुरूअवराहिलासो । अहवा साअरं वज्जिअ कहिं वा महाणदीए पविसिदव्वं ? । ( दिष्ट्या, इदानीम् ते अनुरूपवराभिलाषः । अथवा सागरं वर्जयित्वा कुत्र वा महानद्या प्रवेष्टव्यम् ।)[11] [40]

**राजा** – ( सहर्षम् ) श्रुतं श्रोतव्यम् । [41]

स्मर एव तापहेतुर्निर्वापयिता[12] स एव मे जातः ।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य ।। **3 – 10** ।। [ 42 ]

**शकुन्तला** – एवं जदि वो अहिमदं तत् तधा मन्तेधं मं जधा तस्स राएसिणो अणुअम्पणीआ होमि । अण्णधा मां सिञ्चध दाणिं उदएण । ( एवं यदि वोऽभिमतं तत्तथा मन्त्रयेथां मां यथा तस्य राजर्षेरनुकम्पनीया भवामि । अन्यथा मां सिञ्चतमिदानीम् उदकेन । ) [ 43 ]

**राजा** – विमर्शच्छेदि वचनम्[13] । [ 44]

---

[11] अयं पाठो ( उक्ति-क्रमांकाः 28-41 ) मैथिल-पाठानुरोधेन द्विभागे विभज्य स्थापितः । कदाचित् तथैव पाठः मौलिकः स्यादित्यनुमीयते ।

[12] अयं "निर्वापयिते"ति शब्दोऽपि "लब्धं मया नेत्रनिर्वापणमि"त्यस्यैव पाठस्य समर्थको भवति ।

**प्रियंवदा** – (जनान्तिकम्) ) अणसूए, दूरेगदमम्महा इअं अक्खमा कालहरणस्स । जस्सिं बद्धभावा सो वि ललामभूदो पोरवाणं । ता तुरिदव्वं येव से अहिलासं अणुवट्टिदुं । ( अनसूये, दूरेगतमन्मथेयम् अक्षमा कालहरणस्य । यस्मिन् बद्धभावा सोऽपि ललामभूतः पौरवाणाम्, तत् त्वरितव्यम् एवास्या अभिलाषम् अनुवर्तितुम् । ) [ 45 ]

**अनसूया** – ( अपवार्य ) जधा भणसि । ( यथा भणसि[14] ) [ 46]

**अनसूया** – को उण उवाओ भवे जेण सहीए अविलम्बिदं णिगूढं मणोरहं संपादेम्ह ।
( कः पुनरुपायो भवेद् येन सख्या अविलम्बितं निगूढं मनोरथं सम्पादयावः । ) [ 47 ]

**प्रियंवदा** – णिगूढं पअदिदव्वं त्ति चिन्तणीअं भवे । सिग्घं त्ति ण दुक्करं । ( निगूढं प्रयतितव्यम् इति चिन्तनीयं भवेद् । शीघ्रमिति न दुष्करम् । ) [48]

**अनसूया** – कधं विअ । ( कथमिव । ) [49 ]

**प्रियंवदा** – सो राएसी इमाए सिणद्धदृट्ठि सूइदाहिलासो, इमाइं दिवसाइं पआअरकिसो विअ लक्खेअदि । ( स राजर्षिरस्यां स्निग्धदृष्टिः सूचिताभिलाष, इमानि दिवसानि प्रजागरकृश इव लक्ष्यते । ) [50]

**राजा** – सत्यमित्थंभूतोऽस्मि । तथा हि – [51]

इदमशिशिरैरन्तस्तापैर्विवर्णमणीकृतं
निशि निशि भुजन्यस्तापाङ्गप्रवृत्तिभिरश्रुभिः ।
अनभिलुलितज्याघाताङ्कान्मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं मया प्रतिसार्यते ।। **3 – 11** ।। [ 52 ]

**प्रियंवदा** – ( विचिन्त्य ) अणसूए, मअणलेहो दाणिं करीअदु । तं सुमणोगोविदं कदुअ देवसेसावदेसेण तस्स रञ्ञो हत्थे पाडइस्सं । ( अनसूये, मदनलेख इदानीं क्रियताम् । तं सुमनोगोपितं कृत्वा देवशेषापदेशेन तस्य राज्ञो हस्ते पातयिष्यामि । ) [53]

**अनसूया** – रोअदि मे सुउमारपओओ । किं वा सउन्तला भणादि । ( रोचते मे सुकुमार-प्रयोगः । किं वा शकुन्तला भणति । ) [54]

**शकुन्तला** – ( सलज्जम् ) णिओओ वि विकप्पीअदि । ( नियोगोऽपि विकल्प्यते ?। ) [55]

**प्रियंवदा** – ( शकुन्तलां प्रति ) तेण हि उवण्णासपुरवं अत्तणो चिन्तेहि किंपि सुललिदं पदबन्धं । ( तेन हि, उपन्यासपूर्वम् आत्मनश्चिन्तय किमपि सुललितं पदबन्धम् । ) [56]

**शकुन्तला** – चिन्तइस्सं । अवधीरणाभीरुअं पुणो वेवदि मे हिअअं । ( चिन्तयिष्यामि । अवधीरणाभीरुकं पुनर्वेपते मे हृदयम् । ) [57]

**राजा** – ( सहर्षम् )

अयं स ते तिष्ठति संगमोत्सुको
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं
श्रियो दुरापः कथमीप्सितो भवेत्[15] ।। **3 – 12** ।। [58]

**सख्यौ** – अत्तगुणावमाणिणि । को दाणिं सारदिअं जोण्हं आदवत्तेण वारयिस्सदि । ( आत्मगुणावमानिनि, क इदानीं शारदीयां ज्योत्स्नाम् आतपत्रेण वारयिष्यति । ) [59]

---

[13] काश्मीर-पाठ इतः परम् "एतावत् कामफलं, यत्नफलमन्यदि"ति ।, मै.-पाठे "एतदवस्थापि मां सुखयती"-ति ।, ( एतावान् कामिनः इत्यारभ्य । शृ. प्र. 29-105, पृ. 1300 ) ते च सर्वे पाठ्यांशाः प्रक्षिप्ता एव ।

[14] का.-पाठ इतः परं नायक-नायिकयाः कृते 1. सागर-महानद्योः, 2. सहकारातिमुक्तलतयोरुपमानं प्रयुक्तं दृश्यते । एवञ्च, दुःषन्तेन प्रयुक्तमुपमानं ( चित्राविशाखे शशाङ्कलेखामनुवर्तत इति ) तच्च सर्वं प्रक्षिप्तमेव, यतो हि "अक्षमेयं कालहरणस्ये"ति निश्चयात् परं काव्यस्य / वाग्विलासस्य नैवावकाशः ।

[15] मै.-बं.-पाठयोरितः परं "अयं स यस्मात् प्रणयावधीरणाम्0" इति ।, ( प्रक्षिप्त-श्लोक-संख्या- 12 )

**राजा –** ( विलोकयन् ) स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । [60]

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ।। **3 – 13** ।। [ 61 ]

**शकुन्तला –** हला, चिन्तिदा मए गीदिया । असण्णिहिदाणि उण लेहसाहणाणि । ( हले, चिन्तिता मया गीतिका । असन्निहितानि पुनर्लेखसाधनानि । ) [ 62 ]

**प्रियंवदा –** णं इमस्सिं सुओदरसुउमारे णलिणीवत्ते पत्तच्छेदभत्तीए णहेहिं णिक्खित्तवण्णं करेहि । तदो सुणम्ह से अक्खराइं । ( नन्वस्मिंश्शुकोदरसुकुमारे नलिनीपत्रे पत्रच्छेदभक्त्या नखैर्निक्षिप्तवर्णं कुरु । ततः शृणुमोऽस्याक्षराणि । ) [ 63]

**शकुन्तला –** ( तथा कृत्वा[16] ) सुणेह दाव णं संगदत्था ण वेत्ति । ( शृणुतं तावदेनां सङ्गतार्था न वेति ।)[64]

**उभे –** अवहिद म्ह । ( अवहिते स्वः । ) [ 65]

**शकुन्तला –** ( पठति )

तुज्झ ण आणे हिअअं मम उण मअणो[17] दिवा अ रत्तिं अ ।
णिक्कीव तवेइ बलिअं तुह हुत्तमणोरहाइ अङ्गाइं ।। **3 – 14** ।।
( तव न जाने हृदयं मम पुनः मदनो दिवा च रात्रिश्च ।
निष्कृप, तपति बलीयस्तवाभिमुखमनोरथान्यङ्गानि ) ।। **3 – 14** ।। [ 66 ]

**राजा –** ( सहर्षमुपगम्य )

तपति तनुगात्रि मदनस्त्वामनिशं, मां पुनर्दहत्येव ।
ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः ।। **3 –15** ।। [ 67]

**सख्यौ –** ( विलोक्य सहर्षमुत्थाय ) सागदं जधा चिन्तिदफलस्स अवलम्बिणो मणोरहस्स । ( स्वागतं यथा चिन्तितफलस्यावलम्बिनो मनोरथस्य । [68]

**शकुन्तला –** ( आत्मगतं ससाध्वसं च ) हिअअ, तधा उत्तम्मिअ दाणिं ण किंचि पडिवज्जसि । ( हृदय, तथोत्ताम्येदानीं न किञ्चित् प्रतिपद्यसे । ( इत्युत्थातुमिच्छति ) [ 69]

**राजा –** अलमायासेन । [70]

संस्पृष्टकुसुमशयनान्याशुर्विवर्णितमृणालवलयानि ।
गुरुसंतापानि न ते गात्राण्युपचारमर्हन्ति ।। **3 – 16** ।। [71]

**अनसूया –** इदो सिलादलेक्कदेसं अणुगेण्हदु वअस्सो । ( इतः शिलातलैकदेशमनुगृह्णातु वयस्यः । ) [72]

**राजा –** ( उपविश्य ) प्रियंवदे, कच्चित् सखीं वो नातिबाधते शरीरसंतापः । [73]

**प्रियंवदा –** ( सख्या सहोपविष्टा ) लब्धोसधो संपदं उवसमं गमिस्सदि कालेण । ( लब्धौषधस्साम्प्रतम् उपशमं गमिष्यति कालेन[18] । ) [74]

**प्रियंवदा –** महाभाअ, दोण्हं पि वो अण्णोण्णाणुराओ पच्चक्खो । सहीसिणेहो उण मं पुणरुत्तवादिणीं करेदि । ( महाभाग, द्वयोरपि वाम् अन्योऽन्यानुरागः प्रत्यक्षः । सखीस्नेहः पुनर्माम् पुनरुक्तवादिनीं करोति । ) [ 75]

**राजा –** उच्यताम्, विवक्षितं ह्यनुक्तम् अनुतापं जनयति । [ 76]

**प्रियंवदा –** तेण हि सुणादु महाराओ । ( तेन हि शृणोतु महाराजः । ) [ 77]

**राजा –** अवहितोऽस्मि । [78]

---

[16] शकुन्तला तूदरमाधारीकृत्य शयनावस्थायां मदनलेखं लिखतीत्यवधेयम् ।

[17] मैथिलपाठाद् गृहीतमिदं पाठान्तरम् । तच्च समीचीनम्, राज्ञ उक्तावपि मदनशब्दस्यैव संनिवेशाद् ।

[18] इतः परं "मेघनादाहतां मयूरीमिव0" इत्युपमाने प्रयुज्यमाने सति, शकुन्तलां सलज्जा तिष्ठतीति पाठान्तरं मैथिलादि-पाठेषु, किन्तु तत्तु प्रक्षिप्तमेव । यतो हि, शकुन्तलया तु शयितव्यमेवेति कविसंकल्पिता योजना ।

**प्रियंवदा** – इअं णो सही तुमं य्येव उद्देसिअ भअवदा मअणेण इमं ईदिसं अवत्थन्तरं णीदा। ता अरिहसि अब्भुवत्तीए से जीविदं अवलम्बिदुं। ( इयं नस्सखी त्वामेवोद्दिश्य भगवता मदनेनेदमीदृशम् अवस्थान्तरं नीता। तदर्हस्यभ्युपपत्त्याऽस्या जीवितम् अवलम्बितुम्। ) [79]

**राजा** – भद्रे, साधारण एषः प्रणयः। सर्वथा अनुगृहीतोऽस्मि[19]। [ 80]

**शकुन्तला** – ( सस्मितम् ) हला, अलं वो अन्तेउर-विहार[20]-पय्युस्सुएण राएसिणा उवरुद्धेण। ( हला, अलं वोऽन्तःपुर-विहार-पर्युत्सुकेन राजर्षिणोपरोधेन। ) [ 81 ]

**राजा** – सुन्दरि,

इदमनन्यपरायणमन्यथा<br>
हृदयसन्निहिता हृदयं मम।<br>
यदि समर्थयसे मदिरेक्षणे<br>
मदनबाणहतोऽपि हतः पुनः ॥ **3 – 17** ॥ [82]

**अनसूया** – वअस्स, बहुवल्लभा राआणो सुणीअन्ति। जधा णो सही बन्धुअणे असोअणीआ होदि तधा णिव्वाहेहि। ( वयस्य, बहुवल्लभा राजानः श्रूयन्ते। यथा नः सखी बन्धुजनेऽशोचनीया भवति, तथा निर्वाहय। ) [83]

**राजा** – भद्रे,

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।<br>
धर्मेणोल्लिखिता[21] लक्ष्मीस्सखी च युवयोरियम् ॥ **3 – 18** ॥ [84]

**उभे** – अणुगिहिद म्ह। ( अनुगृहीते स्वः[22]। ) [ 85 ]

**अनसूया** – ( बहिर्विलोक्य ) पिअंवदे, एसो मिअपोदओ इदो तदो दिण्णदिट्ठी उस्सुओ णूणं मादरं परिब्भट्ठं अण्णेसदि। ता संजोजइस्सं दाव णम्। ( इत्युत्तिष्ठति ) ( प्रियंवदे, एष मृगपोतक इतस्ततो दत्तदृष्टिरुत्सुको नूनं मातरं परिभ्रष्टाम् अन्वेषति। तत्संयोजयिष्यामि तावदेनम्। ) [ 86 ]

**प्रियंवदा** – णं चवलओ खु एसो। एआइणी णिओजेदुं ण पारेसि। ता अहं पि दे अणुवत्तिदुं करयिस्सं। ( ननु चपलकः खल्वेषः। एकाकिनी नियोजयितुं न पारयसि। तदहमपि ते अनुवर्तितुं करिष्यामि। ) [87]

( इत्युभे प्रस्थिते ) [88]

**शकुन्तला** – हला अण्णदरा वो गच्छदु, अण्णधा असरण म्हि। ( हले, अन्यतरा वो गच्छतु। अन्यथा--ऽशरणाऽस्मि। ) [ 89 ]

**उभे** – ( सस्मितम् ) जो पुहवीए सरणं, सो तुह समीवे। ( यः पृथिव्याः शरणं स तव समीपे। ) [90]

( इति निष्क्रान्ते ) [91]

**शकुन्तला** – कधं गदं य्येव। ( कथं गतम् एव। ) [92]

**राजा** – अलमावेगेन। नन्वयमाराधयिता जनस्तव सखीभूमौ वर्तते। तदुच्यताम् – [93]

किं शीतलैः क्लमविनोदिभिरार्द्रवातं<br>
संचालयामि नलिनीदलतालवृन्तैः।<br>
अङ्के निधाय चरणावुत पद्मताम्रौ<br>
संवाहयामि करभोरु यथासुखं ते ॥ **3 – 19** ॥ [94]

**शकुन्तला** – ण माणणीए जणे अत्ताणअं अवराधइस्सं। ( न माननीयेषु जने आत्मानम्

---

[19] मै.-पाठाद् गृहीतेयमुक्तिः। यया चोक्त्या दम्पत्योर्मध्ये समान उपाकार्योपकारकभावो भवितुमर्हतीति ध्वन्यते। ( का.-पाठे-"ऽनुगृहीतोऽस्मी"त्येव। अत्र तु दुष्यन्तः स्वयमुपकृत इति कथयन्नपि केवलम् उपकारक-व्यक्तिरूपेणैव प्रदर्श्यते। )

[20] का.-पाठस्यास्य समर्थनमुत्तरवर्तिन्यामुक्त्यां ( बहुवल्लभेति शब्देन ) प्राप्यते।

[21] का.-पाठस्यास्य समर्थनं षष्ठांके धनमित्रस्य प्रसंगे दृश्यते। तस्यानपत्यस्य धनं नाहरति दुःषन्तः।

[22] का.-मै.-बं.-पाठेष्वितः परम् "अपराधमिमं ततः सहिष्ये0" इति। ( प्रक्षिप्त-श्लोक-संख्या- 13 )

अपराधयिष्यामि । ) [ 95]

( अवस्थासदृशमुत्थाय प्रस्थिता ) [96]

**राजा** – ( अवष्टभ्य ) सुन्दरि, अपरिनिर्वाणोऽयं दिवसः । इयं च तेऽवस्था । [97]

उत्सृज्य कुसुमशयनं कदलीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिपाण्डुरपेलवैरङ्गैः[23] ॥ **3 – 20** ॥ [98]

**शकुन्तला** – ( कृतककोपा ) पोरव, रक्ख विणअं । इदो इदो इसिओ सञ्चरन्ति । ( पौरव, रक्ष विनयम् । इत इत ऋषयः सञ्चरन्ति[24] । ) [99]

**राजा** – ( दिशोऽवलोक्य ) कथं प्रकाशम् अस्मि निर्गतः । [100]

( ससंभ्रमम्, शकुन्तलां मुक्त्वा तैरेव पदैर्निवर्तते । ) [101]

**शकुन्तला** – ( स्तोकमुपगम्य साङ्गभङ्गम् ) पोरव, अणिच्छापूरओ वि दंसणमेत्तसुहदो ण ते अअं जणो विसुमरिदव्वो । ( पौरव, अनिच्छापूरकोऽपि दर्शनमात्रसुखदो न तेऽयं जनो विस्मर्तव्यः ) [102]

**राजा** – सुन्दरि,[103]

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिनावसानच्छायेव[25] पुरोमूलं वनस्पतेः[26] ॥ **3 – 21** ॥ [104]

**शकुन्तला** – ( स्तोकमिव गत्वा ) हद्धी, ण मे चरणा पुरोमुहा पहवन्ति । इमेहिं अय्यउत्तस्स कुरवएहिं ववहिदा पच्छादो लदामण्डवअस्स पेक्खिस्सं दाव से भावानुबन्धं । ( तथा करोति ) ( हा धिक्, न मे चरणौ पुरोमुखौ प्रभवतः । एभिरार्यपुत्रस्य, कुरबकैर्व्यवहिता पश्चाल्लता-मण्डपकस्य प्रेक्षिष्ये तावद् अस्य भावानुबन्धम् । ) [ 105]

**राजा** – प्रिये, माम् एवम् अनुरागैकरसं समुत्सृज्य प्रस्थितैवासि निरपेक्षं गन्तुम्[27] । [106]

अनिर्दयोपभोग्यस्य रूपस्य मृदुनस्तथा ।
दारुणं खलु ते चेतः शिरीषस्येव बन्धनम्[28] ॥ **3 – 22** ॥ [107]

**शकुन्तला** – इमं सुणिअ ण मे अत्थि विहवो गन्तुम् । ( इमं श्रुत्वा न मेऽस्ति विभवो गन्तुम् । ) [108]

**राजा** – किमिहाहं सम्प्रति प्रियाशून्ये करोमि । गमिष्यामि । ( प्रस्थितः । भूमिं विलोक्य ) हन्त, व्याहतं मे गमनम् । [109]

मणिबन्धविगलितमिदं
संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगडमिव मे
मृणालवलयं स्थितं पुरतः[29] ॥ **3 – 23** ॥ [110]

( सबहुमानमादत्ते ) [111]

**शकुन्तला** – ( हस्तमवलोक्य ) अम्मो, दुब्बलसिढिलदाए पब्भट्ठं पि एदं मुणालवलअं मए ण विण्णादं । ( अहो, दुर्बलशिथिलतया प्रभ्रष्टमपि एतन्मृणालवलयं मया न विज्ञातम् । ) [112]

---

[23] का.-मै.-बं.-पाठेष्वितः परम् "अप्यौत्सुक्ये महति न वरप्रार्थनासु प्रतार्याः" इति ।( प्रक्षिप्त-श्लोक-संख्या-14)

[24] मै.-बं.-दाक्षि.-देव.-पाठेष्वितः परं "गान्धर्वेण विवाहेन बह्व्यो हि मुनिकन्यकाः0" इति ।, ( प्रक्षिप्त-श्लोक-संख्या- 15 ), केवलं का.-पाठे तु नास्त्येतादृशः श्लोकः ।

[25] मध्याह्नकालात्समारब्धोऽयं मिलनप्रसंगः सायंकालपर्यन्तं प्रचलतीत्यवधेयम् ।

[26] शृङ्गारप्रकाशे ( 28-155, पृ. 1270 ) समुद्धृतोऽयं श्लोकः ।

[27] असमञ्जसपदक्रमेऽस्मिन् दुःषन्तस्य मनोविचलनं द्योत्यते ।

[28] शृङ्गारप्रकाशे ( 33-68, पृ. 1528 ) समुद्धृतोऽयं श्लोकः । ( श्रीरेवाप्रसादैर्द्विवेदिभिर्न समाकलितः कालिदासीय-पद्यत्वेन )

[29] गणरत्नमहोदधौ ( 2-70, पृ. 110 ) समुद्धृतोऽयं श्लोकः ।

**राजा** – ( वलयाभरणमुरसि विन्यस्य ) अहो सुखस्पर्शः । [113]

अनेन लीलाभरणेन ते प्रिये
विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभाग्
अचेतनेनापि सता, न तु त्वया ।। **3 – 24** ।। [114]

**शकुन्तला** – अदो अवरं असमत्थ म्हि विलम्बिदुं । भोदु । एदेण य्येव ववदेसेण से अत्ताणअं दंसयिस्सं । ( अतोऽपरमसमर्थास्मि विलम्बितुम् । भवतु । एतेनैव व्यपदेशेनास्यात्मानं दर्शयिष्यामि । ) [115]

( इत्युपगच्छति ) [116]

**राजा** – ( दृष्ट्वा सहर्षम् ) अये, जीवितेश्वरी[30] मे प्राप्ता । परिदेवितानन्तरं प्रसादेनोपकर्तव्योऽस्मि खलु दैवस्य । [117]

पिपासाक्षामकण्ठेन याचितं चाल्पयाचिना ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे ।। **3 – 25** ।। [118]

**शकुन्तला** – ( राज्ञः प्रमुखे स्थिता ) अङ्ग, अद्धपहे सुमरिअ एदस्स हत्थब्भंसिणो मुणालवलअस्स किदे सण्णिअत्त म्हि । आचक्खिअं विअ मे हिअएण तए गिहीदं त्ति । ता क्खिव इदं, मा मुणिअणे अत्ताणअं मं च सुअइस्ससि । ( अङ्ग, अर्धपथे स्मृत्वैतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते सन्निवृत्तास्मि । आख्यातमिव मे हृदयेन त्वया गृहीतमिति । तत् क्षिपेदम् । मा मुनिजन आत्मानं मां च सूचयिष्यसि । ) [119]

**राजा** – एकेनाभिसन्धिना प्रत्यर्पयेयम्, नान्यथा । [120]

**शकुन्तला** – केण । ( केन । ) [121]

**राजा** – यदीदमहमेव यथास्थानं निवेशये । [122]

**शकुन्तला** – एवं करेहि । ( एवं कुरु । ), ( इत्युपसर्पति । ) [123] [31]

**राजा** – इमं शिलापट्टमेव संश्रयावः । [124 ]

( उभौ परिक्रम्योपविष्टौ ) [ 125 ]

**राजा** – ( शकुन्तलाया हस्तमादाय, आत्मगतम् ) [ 126 ]
अहो स्पर्शः[32] । [ 127 ]

**शकुन्तला** – ( हर्षरोमाञ्चं रूपयति ) [ 128 ]
तुवरअदु अय्यउत्तो । ( त्वरयत्वार्यपुत्रः । ) [ 129 ]

**राजा** – सुन्दरि[33], नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य । यदि तेऽभिप्राय एतद् अन्यथा घटयिष्यामि । [130]

**शकुन्तला** – ( विहस्य ) कालक्खेवकुसलो, जं दे रोअदि । ( कालक्षेपकुशलः, यत् ते रोचते । ) [131]

**राजा** – ( सव्याजं विलम्बितम् अवमुच्यावलम्ब्य च ) सुन्दरि, दृश्यताम् इदम् – [132]

अयं हि ते श्यामलतामनोहरो

---

[30] पूर्वम् ततश्च ( उक्ति-क्रमांकः 108-130 ) नायिकया दुःषन्तस्य कृते "आर्यपुत्र" इति शब्दः प्रयुक्तः । अत्र च नायकेन सा जीवितेश्वरीति शब्देन निरूप्यते, तदवधेयम् ।, ( अस्मादेव च संबोधनात्तु षष्ठाङ्कस्य चतुर्थे श्लोके निर्दिष्टस्य गोत्रस्खलनस्य निराधारत्वं न प्रतीयते । )

[31] [123] उक्तिरियं रंगसूचना च मैथिल-पाठाद् गृहीते ।

[32] इतः परं "हरकोपाग्निदग्धस्य0" इति श्लोकात्मिका स्वगतोक्तिः, सा प्रक्षिप्ता । ( प्रक्षिप्त-श्लोक-संख्या-16 ) ।

[33] इतः पूर्वं दुःषन्तस्य स्वगतोक्ति"रिदानीमस्मि विश्वस्तो भर्तुराभाषणेने"ति, सा रंगकर्मिभिः प्रक्षिप्ता स्यात् ।

विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिराश्रितः ।। **3 – 26** ।। [ 133 ]

**शकुन्तला** – ण दाव णं पेक्खामि । पवणकम्पिणा कण्णुप्पलरेणुणा कलुसीकिदा मे दिट्ठि । ( न तावद् एनं प्रेक्षे । पवनकम्पिना कर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः । ) [ 134 ]

**राजा** – ( सस्मितम् ) यदि मन्यसे तदाहमेनां वदनमारुतेन विशदां करिष्ये[34] । [ 135 ]

**शकुन्तला** – अणुकम्पिदा भवेअं । ण उवणदे विस्ससामि । । ( अनुकम्पिता भवेयम् । ( किन्तु ) नोपनते विश्वसिमि । ) [ 136]

**राजा** – मा मैवम् । नवो हि परिजनः सेव्यानामादेशात्परं न वर्तते । [137]

**शकुन्तला** – एसो य्येव दे अच्चुवआरो अविसम्भजणओ । ( एष एव तेऽत्युपचारोऽविश्रम्भजनकः।) [138]

**राजा** – ( आत्मगतम् ) नाहमेवं रमणीयम् आत्मनस्सेवाकालं शिथिलयिष्यामि । [ 139]

( मुखम् उन्नमयितुं प्रवृत्तः ।,
शकुन्तला अकामप्रतिषेधं रूपयन्ती विहरति । ) [ 140]

**राजा** – अये पर्यश्रुतां ते गतं चक्षुः । अलमस्मान् प्रत्यविनयशङ्कया । उन्नीयतामाननम् । [141]

( शकुन्तला किंचिद् दृष्ट्वा स्थिता[35] ) [142]

**शकुन्तला** – पडिण्णादमन्थरो विअ अय्यउत्तो संवुत्तो । ( प्रतिज्ञातमन्थर इवार्यपुत्रस्संवृत्तः । ) [143]

**राजा** – सुन्दरि, कर्णोत्पलसन्निकर्षाद् ईक्षणसादृश्येन मूढोऽस्मि । [144]

( मुखमारुतेन नेत्रं सिञ्चति । ) [145]

**शकुन्तला** – भोदु । पकिदित्थ म्हि संवुत्ता । लज्जामि उण अणुवआरिणी पिअआरिणो अय्यउत्तस्स । ( भवतु, प्रकृतिस्थाऽस्मि संवृत्ता । लज्जे पुनरुनुपकारिणी प्रियकारिण आर्यपुत्रस्य । ) [146]

**राजा** – किमन्यत् । [147]

इदमप्युपकृतमबले सुरभि मुखं ते मया यदाघ्रातम् ।
( सस्मितम् ) [148]
न तु कमलस्य मधुकरस्सन्तुष्यति गन्धमात्रेण[36] ।। **3 – 27** ।। [149]

**शकुन्तला** – असंतोसेण किं करयिस्ससि । ( असंतोषेण किं करिष्यसि । ) [150]

**राजा** – इदम् । ( इति व्यवसितः ) [151]

**( नेपथ्ये )** [152]

अइ चक्कवाअवहु, आमन्तेहि सहअरं । उवत्थिदा रअणी [37] ।
( अयि चक्रवाकवधु, आमन्त्रयस्व सहचरम् । उपस्थिता रजनी । ) [153]

**शकुन्तला** – ( कर्णं दत्त्वा ससंभ्रमम् ) पोरव, एसा मम सरीरवुत्तान्तोवलम्भाअ तादस्स धम्म-कणिअसी

---

[34] का.-मै.-बं.-पाठेषु दृश्यमानस्यास्य कलुषितनेत्रसंमार्जनस्य प्रसंगस्य षष्ठांके "कार्या सैकतलीन .... कण्डूय-मानां मृगीम्0" इति श्लोकेन सह सम्बन्धो वर्तते, सो ध्यानार्हः । अनेन च प्रसंगस्यास्य मौलिकत्वं सिध्यति ।

[35] इतः परम् "चारुणा स्फुरितेनायमपरिक्षतकोमल0" इति श्लोकः त्रिषु बृहत्पाठेषूपलभ्यते । किन्त्वन्तिमे पादे "प्रियाधरः ममानुज्ञां करोति", यद्वा "प्रियाधरः ममानुज्ञां ददाती"ति व्याकरणदृष्ट्या सुसंगतं न प्रतिभाति । अतः प्रक्षिप्त-श्लोकत्वेन त्याज्यः । ( प्रक्षिप्त-श्लोक-संख्या- 17 )

[36] दाक्षि.-देव.-पाठयोरस्य श्लोकस्य स्थाने "अपरिक्षतकोमलस्य यावत्0" इत्यपरः श्लोकः स्थाप्यते । ( प्रक्षिप्त-श्लोक-संख्या-18 )

[37] का.-पाठे "आर्या गौतमी"त्येव ।, किन्तु नाटकेऽस्मिन् शकुन्तलायाः कृते चक्रवाकादीनां पक्षिणां नैकानि प्रतीकानि प्रयुक्तानि प्राप्यन्ते । अत उक्तिरियं मैथिल-पाठात् स्वीक्रियते ।

उवत्थिदा, ता विडवान्तरिदो होहि । ( पौरव, एषा मम शरीरवृत्तान्तोपालम्भाय तातस्य धर्मकनीयस्युपस्थिता । तद् विटपान्तरितो भव । ) [154]

**राजा** – ( तथा करोति । ) [155]

( ततः प्रविशति पात्रहस्ता गौतमी ) [156]

**गौतमी** – ( उपसृत्य ) अच्चाहिदं । इदो देवदासहाआ चिट्ठसि । ( अत्याहितम्, इत देवतासहाया तिष्ठसि । ) [157]

**शकुन्तला** – इदाणिं य्येव मालिणिं अवदीण्णाओ पिअंवदामिस्साओ । ( इदानीमेव मालिनीम् अवतीर्णाः प्रियंवदामिश्राः । ) [158]

**गौतमी** – ( दर्भोदकेन शकुन्तलामभ्युक्ष्य ) वत्से, निराबाधा त्वं चिरं जीव । अवि लहुसंतावाइं दे अङ्गाइं । ( वत्से, निराबाधा त्वं चिरं जीव । अपि लघुकसन्तापानि तेऽङ्गानि । ) [159]

**शकुन्तला** – अत्थि विसेसो । ( अस्ति विशेषः । ) [160]

**गौतमी** – वच्छे, परिणदो दिअसो । ता एहि । उडअं य्येव गच्छम्ह । ( वत्से, परिणतो दिवसः । तदेहि । उटजमेव गच्छामः । ) [161]

**शकुन्तला** – ( अपवार्य ) हिअअ, मणोरहदुल्लहं जणं पाविअ कालहरणं करेसि । अणुसअ विघट्टिदस्स कधं दे सम्पदं । ( पदानि गत्वा प्रतिनिवृत्य, प्रकाशम् ) लदागहअ, आमन्तए तुमं पुणो वि परिभोआअ । ( इति निष्क्रान्ता ) ( हृदय, मनोरथदुर्लभं जनं प्राप्य कालहरणं करोषि । अनुशयविघट्टितस्य कथं ते साम्प्रतम् । लतागृहक, आमन्त्रये त्वां पुनरपि परिभोगाय । ) [162]

( इति निष्क्रान्ते ) [163]

**राजा** – ( पूर्वस्थानमेत्य सनिःश्वासम् ) अहो विघ्नवत्यः प्रार्थितसिद्धयः । मया हि, [164]

मुहुरङ्गुलिसंवृत्ताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिधानम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु[38] ।। **3 – 28** ।। [ 165]

क्व नु खलु साम्प्रतं गच्छामि । अथवा इहैव तावत् प्रियापरिभुक्तेऽतिमुक्तकलतावलये स्थास्यामि । [166]

( सर्वतो विलोक्य ) [167]

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरण[39]मित्यासाद्य ह्रीनेक्षणान्
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि[40] ।। **3 – 29** ।। [168]

( **नेपथ्ये** ) राजन् .. राजन्... । [169]

सायन्तने सवनकर्मणि संप्रवृत्ते
वेदीं हुताशनवतीं परितः प्रयस्ताम् ।
छायाश्चरन्ति बहुधा भयमादधानाः

---

[38] आनन्दवर्धनेन ध्वन्यालोके ( 3-16 ) त्विति निपातस्य व्यंजकतामुदाहर्तुमुद्धृतोऽयं श्लोकः ।, मंचनावसरे तु-निपातस्योच्चारणसमये चुम्बनाकृतिर्जायते द्वयोरोष्ठयोः । अतो "न चुम्बितं तदि"ति पाठभेदो न प्रासंगिकः ।

[39] अस्य बिसाभरणस्योल्लेख एव दुःषन्तेन शकुन्तलाहस्ते मृणालवलयस्य समारोपणं यत्कृतं, तस्य प्रसंगस्य / दृश्यस्य मौलिकतां व्यनक्ति । तस्य च प्रसंगस्य/ दृश्यस्य प्रक्षिप्तत्वं निराकरोति ।

[40] का.-मै.-बं.-पाठेष्वितः परं "रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुनः" इति । ( प्रक्षिप्त-श्लोक-संख्या-19 )

सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ।। **3 – 30** ।। [ 170]

**राजा** – ( ससम्भ्रमम् ) भो भोस्तपस्विनः, मा भैष्ट । अयमहमागतोऽस्मि । [171]

( इति निष्क्रान्तः ) [172]

**।। इति तृतीयोऽङ्कः ।।**

**।। अथ चतुर्थोऽङ्कः ।।**

( ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ तपस्विकन्यके ) [1]

**अनसूया –** पिअंवदे, जदपि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा सउन्तला अणुरूवभत्तिभाइणी संवुत्ता तहावि ण णिवुत्तं मे हिअअं । ( प्रियंवदे, यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा शकुन्तलानुरूपभर्तृभागिनी संवृत्ता, तथापि न निवृत्तं मे हृदयम् । ) [ 2 ]

**प्रियंवदा –** कधं विअ । ( कथमिव । ) [ 3 ]

**अनसूया –** अज्ज सो राआ इट्ठिपरिसमत्तीए इसीहिं विसज्जिदो अत्तणो णअरं । पविसिअ अन्दउरे इदोगदं सुमरिस्सदि वा ण वेत्ति । ( अद्य स राजेष्टिपरिसमाप्तावृषिभिर्विसर्जित, आत्मनो नगरं प्रति । प्रविश्याऽन्तःपुरम् इतो गतं स्मरिष्यति वा न वेति । ) [ 4 ]

**प्रियंवदा –** इत्थ विसत्था होहि । ण तादिसा आकिदिविसेसा गुणविरोहिणो होन्ति । इत्थिअं उण चिन्तणिज्जं । तादो दाणिं इमं वुत्तान्तं सुणिअ ण जाणे किं पडिवज्जिस्सदित्ति । ( अत्र विश्वस्ता भव । न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति । एतावत्पुनश्चिन्तनीयम् । तात इदानीम् इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति । ) [ 5 ]

**अनसूया –** सहि, जधा मं पुच्छसि तधा तादस्स अणुमदं पिअं च । ( सखि, यथा मां पृच्छसि तथा तातस्यानुमतं प्रियञ्च । ) [ 6 ]

**प्रियंवदा –** कधं विअ अणुमदं पिअं च । ( कथमिवानुमतं प्रियं च । ) [ 7 ]

**अनसूया –** किम् अण्णं । गुणवदे कण्णआ पडिवादइदव्वेत्ति अअं दाव पढमो से संकप्पो । तं जदि देव्वं सम्पादेदि णणु अप्पआसेण कदत्थो गुरुअणो । ( किमन्यत् । गुणवते कन्यका प्रतिपादयितव्येत्ययं तावत् प्रथमोऽस्य संकल्पः । तद्यदि दैवं सम्पादयति नन्वप्रयासेन । कृतार्थो गुरुजनः । ) [ 8 ]

**प्रियंवदा –** एवं णेदं । ( पुष्पभाजनमवलोक्य ) सहि, अवचिदाइं खु बलिकम्मपय्यत्ताइं कुसुमाइं । ( एवमेतत् । सखि, अवचितानि खलु बलिकर्मपर्याप्तानि कुसुमानि । ) [ 9 ]

**अनसूया –** सहि, सउन्तलाए वि सोहग्गदेवदा अच्चणीआ । ( सखि, शकुन्तलयापि सौभाग्यदेवता--ऽर्चनीया । ) [ 10 ]

**प्रियंवदा –** जुज्जदि । ( युज्यते । ) ( तदेव कर्म नाटयतः ) [ 11 ]

**( नेपथ्ये )**

अयम् अहं भोः ........... । [12 ]

**अनसूया –** ( श्रुत्वा ) अदिधिणा विअ णिवेदिदं । ( अतिथिनेव निवेदितम् । ) [ 13 ]

**प्रियंवदा –** सहि, णं उडजसण्णिहिदा सउन्तला । आं, अज्ज उण हिअएण असण्णिहिदा । ( सखि, नन्वुटज--संनिहिता शकुन्तला । आम् अद्य पुनर् हृदयेनासंनिहिता । ) [14 ]

**अनसूया –** ( सत्वरम् ) तेण हि होन्दु ( भोदु ) । इत्तिआइं कुसुमाइं । ( प्रस्थिता ) ( तेन हि भवतु, एतावन्ति कुसुमानि । ) [ 15 ]

**( नेपथ्ये )**

आः, अतिथिपरिभाविनि...., [ 16 ]

विचिन्तयन्ती यम् अनन्यमानसा
यतोऽतिथिं[1] वेत्सि न मामुपस्थितम् ।

---

[1] अत्र मै.-आदिपाठेषु "तपोनिधिमि"ति । अनेन दुर्वाससोऽहंकारोऽपि कथ्यते । तेन चातिथिपरिभावनस्य दोषेण सह किमप्यन्यत्कारणमपि संमिश्रीक्रियते शापप्राप्तौ । अतः काश्मीर-पाठ एवात्र ज्यायान् संग्राह्यश्च ।

स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव ।। ( **4 – 1** ) ।। [17 ]

**उभे –** ( श्रुत्वा विषण्णे ) हद्धि य्येव संवुत्तं । कस्सिं वि पूआरहे अवरद्धा सुण्णहिअआ सही । ( हा धिग् एव संवृत्तम्, कस्मिन्नपि पूजार्हेऽपराद्धा शून्यहृदया सखी । ) [ 18 ]

**अनसूया** – ( विलोक्य ) ण खु, ण खु जस्सिं तस्सिं । सुलहकोओ खु एसो दुव्वासा महेसि । हुदासो विअ तुरिदपादुद्धाराए गदीए गच्छिदुं पउत्तो । ( न खलु न खलु यस्मिन् तस्मिन्, सुलभकोपः खल्वेष दुर्वासा महर्षिः । हुताश इव त्वरितपादोद्धारया गत्या गन्तुं प्रवृत्तः । ) [ 19 ]

**प्रियंवदा** – को अण्णो हुदवहादो दहिदुं पहविस्सदि । अणसूये, गच्छ पादेसु पडिअ पसाएहि णं । जाव अहं से अग्धादिअं उपकप्पेमि । ( कोऽन्यो हुतवहाद् दग्धुं प्रभविष्यति । अनसूये, गच्छ[2] पादेषु पतित्वा प्रसादयैनम् । यावद् अहम् अस्य अर्घादिकम् उपकल्पयामि । ) ( अनसूया निष्क्रान्ता ) [ 20 ]

**प्रियंवदा** – ( पादान्तरे स्खलितं निरूप्य ) अम्मो, आवेगक्खलिदाए पब्भट्ठं अग्गहत्थादो पुप्फभाअणं मे । ता पुणो वि अवचिणिस्सं । ( अहो आवेगस्खलितायाः प्रभ्रष्टमग्रहस्तात् पुष्पभाजनं मे । तत् पुनरप्यवचेष्यामि । ) ( तथा करोति ) [ 21 ]

( प्रविश्य) **अनसूया** –सहि, सरीरबद्धो कोओ विअ कस्स सो अणुणअं गेण्हदि । किं च उण साणुक्कोसो कदो । ( सखि, शरीरबद्धः कोप इव कस्य सोऽनुनयं गृह्णाति । किं च पुनस्सानुक्रोशः कृतः । ) [22]

**प्रियंवदा** – तस्सिं बहुअं एदं । ततः(तदो) कहेहि कधं विअ । ( तस्मिन् बहुकं एतत् । ततः कथय कथमिव । ) [ 23 ]

**अनसूया** – जदा णिवत्तिदुं ण इच्छदि । तदा विण्णाविदो मए भगवं, पढमभत्तिं अवेक्खिअ अज्ज अत्तपहाव-विण्णाद[सा]मत्थस्स दुहिदाजणस्स भअवदा अवराहो मरिसिदव्वो त्ति । ( यदा निवर्तितुं नेच्छति तदा विज्ञापितो मया । भगवन्, प्रथमभक्तिम् अवेक्ष्याद्यात्मप्रभावविज्ञातसामर्थ्यस्य दुहितृजनस्य भगवताऽपराधो मर्षितव्य इति । ) [ 24 ]

**प्रियंवदा** – तदो तदो । ( ततः ततः । ) [ 25 ]

**अनसूया** – तदो ण मे वअणं अण्णधा भविदुं अरिहदि । आहरणाहिण्णाणदंसणेण से सावो णिवट्टिस्सदिति मन्तअन्तो य्येव अन्तरिहिदो । ( ततः न मे वचनं अन्यथा भवितुम् अर्हति । आभरणाभिज्ञान-दर्शनेनास्याः शापो निवर्तिष्यत इति मन्त्रयन्नेवान्तर्हितः । ) [ 26 ]

**प्रियंवदा** – सक्कं दाणिं अस्ससिदुं । अत्थि तेण राएसिणा सम्पत्थिदेण सणामधेआङ्किदं अङ्गुलीअं सुमरणिअं त्ति सउन्तलाए सअं य्येव हत्थे पिणद्धम् । तस्सिं च साहिणे अअं उवाओ भविस्सदि त्ति । ( शक्य-मिदानीमाश्वासितुम् । अस्ति तेन राजर्षिणा संप्रस्थितेन स्वनामधेयाङ्कितमङ्गुलीयं स्मरणीय-मिति शकुन्तलायास्स्वयमेव हस्ते पिनद्धम् । तस्मिंश्च स्वाधीनेऽयमुपायो भविष्यतीति । ) [ 27 ]

( परिक्रामतः ) [ 28 ]

**अनसूया** – हला पिअंवदे, पेक्ख पेक्ख वामहत्थोवणिहिद वअणा आलिहिदा विअ सहि भट्टिगडाए चिन्ताए अत्ताणअं वि एसा ण विभावेदि, किं उण आगन्तुअं । ( हले प्रियंवदे, प्रेक्षस्व प्रेक्षस्व । वामहस्तोपनिहितवदनाऽलिखितेव सखी भर्तृगतया चिन्तयाऽत्मानम् अप्येषा न विभावयति, किं पुनरागन्तुकम् । ) [ 29 ]

**प्रियंवदा** – हला अणसूए, दोण्हं येव अम्हेसु एसो साववुत्तन्तो चिट्ठदु । रक्खणीआ खु पकिदिपेलवा सही । ( हला अनसूये, द्वयोरेवावयोरेष शापवृत्तान्तस्तिष्ठतु[3] । रक्षणीया खलु प्रकृतिपेलवा सखी । ) [30]

---

[2] काश्मीर-पाठानुसारेण शापमोचनस्य याचनां कर्तुमनसूया गच्छति ।, तत्र कालान्तरे परिवर्तनं जायते ।

[3] काश्मीर-पाठानुसारेण शापवृत्तान्तस्य संगोपनस्य प्रस्तावः प्रियंवदया क्रियते ।, उत्तरवर्तिनि काले परिवर्तनं क्रियते तत्र ।

**अनसूया** – को दाणिं तावोदएण णवमालिअं सिञ्चदि । ( क इदानीं तापोदकेन नवमालिकां सिञ्चति । ) [31]

( इति निष्क्रान्ते । )

।। **प्रवेशकः**[4] ।। [ 32 ]

।। ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः ।। [ 33 ]

**शिष्यः** – वेलोपलक्षणार्थमादिष्टोऽस्मि तत्रभवता प्रवासात् प्रतिनिवृत्तेनोपाध्यायकण्वेन । तत् प्रकाश्यं निर्गत्य तावद् अवलोकयामि किमवशिष्टं रजन्या इति । ( परिक्रम्यावलोक्य च ) हन्त प्रभातम् । तथा हि – [ 34 ]

कर्कन्धूनाम् उपरि तुहिनं रञ्जयत्यग्रसन्ध्या
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखिताद् उत्थितश्चैष सद्यः
पश्चाद् उच्चैर्भवति हरिणो गात्रम् आयच्छमानः ।। **4 – 2** ।। [ 35 ]

अपि च[5] – [ 36 ]

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षपिततमसा मध्यमं धाम विष्णोः ।
सोऽयं सोमः पतति गगनाद् अल्पशेषैर्मयूखैस्
दूरारोहो भवति महतामप्यपभ्रंशनिष्ठः[6] ।। **4 – 3** ।। [ 37]

।। ततः प्रविशत्यपटीक्षेपेणानसूया ।। [38]

**अनसूया** – एवं णाम विसयपराम्मुहस्स वि एदं ण विदिदं जधा तेण रण्णा सउन्तलाए अणय्यदा आअरिदव्व त्ति । ( एवं नाम विषयपराङ्मुखस्यापि एतद् न विदितं यथा तेन राज्ञा शकुन्तलाया अनार्यताऽ–चरितव्येति । ) [39]

**शिष्यः** – यावद् उपस्थितां वेलां निवेदयामि । ( इति निष्क्रान्तः ) [40]

**अनसूया** – पडिबुद्धा वि किं करयिस्सं । ण मे उत्थिदाए चिन्तीदेसु पहादव्वावारकरणीएसु हत्था पादा वा पहवन्ति । सकामो दाणिं कामो होदु । जेण सिणद्धहिअआ सही असच्चसन्धे जणे पदं कारिदा । ( स्मृत्वा ) अधवा ण तस्स राएसिणो अवराहो दुव्वासकोवो ईत्थ विप्पकरेदि । अण्णधा कधं तादिसो राएसि तादिसाइं वअणाइं मन्तिअ एत्तिअस्स वि कालस्स लेहमेत्तं वि ण विस्सज्ज-इस्सदि । ( विचिन्त्य ) इदं अङ्गुलीअं से अहिण्णाणं विसज्जेम्ह । अह वा दुक्खसीले तवस्सिअणे को अब्भत्थिअदु । ण सहीगमणेण दोसो त्ति ववसिदुं दाणिं पारेम्ह । पवासणिव्वुत्तस्स ताद-कस्सवस्स दुस्सन्तपरिणीदां आवण्णसत्तां कोवि सउन्तलां णिवेदयिस्सदि । इत्थंगदे किं णु खु अम्हेहिं कादव्वम् । ( प्रतिबुद्धाऽपि किं करिष्यामि । न म उत्थितायाश्चिन्तितेषु प्रभातव्यापार-करणीयेषु हस्तौ पादौ वा प्रभवन्ति । सकाम इदानीं कामो भवतु । येन स्निग्धहृदया सखी असत्यसन्धे जने पदं कारिता । ( स्मृत्वा ) अथ वा, न तस्य राजर्षेरपराधो, दुर्वाससःकोपोऽत्र विप्रकरोति । अन्यथा कथं तादृशो राजर्षिस्तादृशानि वचनानि मन्त्रयित्वैतावतोऽपि कालस्य लेखमात्रमपि न विसर्जयति । ( विचिन्त्य ) इदमङ्गुलीयमस्याभिज्ञानं विसर्जयामः । अथवा, दुःखशीले तपस्विजने कोऽभ्यर्थताम् । न सखिगमनेन दोष इति व्यवसितुम् इदानीं पारयामः ।

---

[4] अर्थोपक्षेपकस्यास्य नामाभिधानं नाट्यशास्त्रानुसारि । बृहत्पाठपरम्परायामपि सर्वत्रेदमेव प्रचलति ।
[5] समुच्चयार्थकस्य "अपि चे"ति निपातद्वयस्य स्वारस्यमत्र सिध्यति । तद्यथा- शिष्यः प्रथमं सम्मुखे यद् वर्तते तन्निरूपयति । ततश्चोर्ध्व आकाशे यद् दृश्यते, तन्निरूपयति । अतश्चैतौ श्लोकौ मूलगामिनौ स्याताम् ।
[6] का.-मै.-पाठयोरितः परं "यात्येकतोऽस्तशिखरम्0", "अन्तर्हिते शशिनि सैव कुमुद्वतीम्0" इति च श्लोकौ प्रक्षिप्तौ वर्तेते, पुनरुक्तिदोषग्रस्तत्वात् ।, बं.-पाठे तयोश्च प्राथम्यं दीयते । ( प्रक्षिप्त-श्लोक-संख्ये – 20-21 )

प्रवासनिवृत्तस्य तातकण्वस्य दुःषन्तपरिणीताम् आपन्नसत्त्वां कोऽपि शकुन्तलां निवेदयिष्यति । इत्थंगते किं नु खल्वस्माभिः कर्तव्यम् । ) [41]

।। ततः प्रविशति प्रियंवदा ।। [ 42 ]

**प्रियंवदा** – अणसूये, सउन्तलाए पत्थाणकोदुआणि करेअत्तु । ( अनसूये, शकुन्तलायाः प्रस्थानकौतुकानि क्रियन्ताम् । ) [43]

**अनसूया** – सहि, कधं णेदं । ( सखि, कथमेतत् । ) [44]

**प्रियंवदा** – अणसूये, सुणिस । दाणिं सुहसयिदविबुद्धाए सउन्तलाए समीवं गदम्हि, जाव तं लज्जावणदमुहिं परिसजिअ तादकण्णो अहिणन्ददि । दिट्ठिआ धूमोवरुद्धदिट्ठिणो विअ जणस्स पावक एव आहुदी पडिदा । सुसिस्सपडिपादिआ विअ विज्जा असोअणिज्जासि मे संवुत्ता । ता अज्ज य्येव इसिपरिगृहीदं तुमं भत्तुणो सआसं विसज्जेमि त्ति । ( अनसूये, शृणु, इदानीं सुखशयितविबुद्धायाः शकुन्तलायास्समीपं गतास्मि, यावत् तां लज्जावनतमुखीम् परिष्वज्य तातकण्वोऽभिनन्दति । दिष्ट्या धूमोपरुद्धदृष्टेरपि जनस्य पावक एव आहुतिः पतिता । सुशिष्यप्रतिपादितेव विद्याऽशोचनीयासि मे संवृत्ता । तद् अद्यैवर्षिपरिगृहीतां[7] त्वां भर्तुस्सकाशं विसर्जयामीति । )[45]

**अनसूया** – अध केण आचक्खिदो तादस्स अअं सउन्तलावुत्तान्तो । ( अथ केन आख्यातस्तातस्यायं शकुन्तलावृत्तान्तः । ) [ 46 ]

**प्रियंवदा** – तादस्स अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोवदीए वाआए । ( तातस्याग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोवत्या वाचा । ) [ 47 ]

**अनसूया** – ( सविस्मयम् ) कधं विअ । ( कथमिव । ) [ 48 ]

**प्रियंवदा** – सहि, सुणु । ( सखि, शृणु । ) ( संस्कृतमाश्रित्य पठति ) [ 49 ]

दुःषन्तेनाहितं वीर्यं दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्, नग्निगर्भां शमीमिव ।। **4 – 4** ।। [ 50 ]

**अनसूया** – ( सहर्षं प्रियंवदामाश्लिष्य ) सहि, पिअं मे । किं तु अज्ज य्येव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं खु दाणिं परितोसं समुव्वहामि । ( सखि, प्रियं मे । किन्तु अद्यैव शकुन्तला नीयत इत्युत्कण्ठासाधारणं खल्वीदानीं परितोषं समुद्वहामि । ) [51]

**प्रियंवदा** – उक्कण्ठं विणोदयिस्सामो, सा दाणिं णिव्वुदा होदु । ( उत्कण्ठां विनोदयिष्यामः । सेदानीं निर्वृत्ता भवतु । ) [ 52 ]

**अनसूया** – तेण हि एदस्सिं चुदसाहावलम्बिदे णालिएर समुग्गए तण्णिमित्तं एव कालान्तर[क्ख]मा क्खित्ता मए सकेसरगुणा । ते तुमं हत्थसण्णिहिदे करेहि, जाव अहं से आमयरोहणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालहणत्थं विरएमि । ( इति निष्क्रान्ता ) [ 53 ]

( प्रियंवदा नाट्येन सुमनसो गृह्णाति । ) [54]

( तेन हि, एतस्मिंश्चूतशाखावलम्बिते नारिकेलसमुद्गके तन्निमित्तम् एव कालान्तरक्षमा क्षिप्ता मया सकेसरगुणा (तथा) त्वं हस्तसन्निहिताम् कुरु । यावद् अहम् अस्या आमयरोधनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालम्भनार्थं विरचयामि । ) ( इति निष्क्रान्ता ) [55]

( **नेपथ्ये** )

गौतमि, आदिश्यन्ताम् शाङ्गर्रवमिश्राः शकुन्तलानयनाय सज्जीभवन्त्विति । [56]

**प्रियंवदा** – ( आकर्ण्य ) अणसूए, तुवर तुवर, एदे खु हत्थिणाउरगामिण इसिओ सद्दावीअन्ति । ( अनसूये, त्वरस्व त्वरस्व । एते खलु हस्तिनापुरगामिना ऋषयः शब्दाय्यन्ते । ) [57]

( प्रविश्य समालभनहस्ता ) [58]

---

[7] दाक्षि.-देव.-पाठयोस्तु "राजर्षिपरिगृहीतामि"ति, किन्तु कथनमिदमप्रासंगिकम्, अतोऽग्राह्यः पाठभेदोऽयम् ।

**अनसूया** – सहि पिअंवदे, एहि गच्छम्ह । ( सखि प्रियंवदे, एहि गच्छावः । ) [59]

( उभे परिक्रामतः ) [ 60 ]

**प्रियंवदा** – ( अवलोक्य ) एसा सुज्जोदअ य्येव निमज्जिदा गोदमीसहिदा सउन्तला चिट्ठदि । ता उवसप्पम्ह णं । ( एषा सूर्योदय एव निमज्जिता गौतमीसहिता शकुन्तला तिष्ठति । तर्हि उपसर्पाव एनाम् । ) [61]

( ततः प्रविशति यथानिर्दिष्टा[8] शकुन्तला गौतमी च ) [62]

**शकुन्तला** – भअवदि पणमामि । ( भगवति, प्रणमामि । ) [63]

**गौतमी** – जाद, भत्तुणो बहुमाणसुहइत्तअं देवीसद्दं अधिगच्छ । ( जाते, भर्तुः बहुमानसुखयितारं देवीशब्दम् अधिगच्छ । ) [64]

**सख्यौ** – ( उपगम्य ) सहि, सुमज्जणं दे होदु । ( सखि, सुमज्जनं ते भवतु । ) [ 65 ]

**शकुन्तला** – ( दृष्ट्वा सादरम् ) साअदं पिअसहीणं । इदो णिसीदध । ( स्वागतं प्रियसखीभ्याम्[9] । इतो निषीदतम् । ) [ 66 ]

**उभे** – ( उपविश्य ) हला सउन्तले । उज्जुअगदा होहि । जाव दे मङ्गलसमालद्धं अङ्गं करीअदु । ( हला शकुन्तले, ऋजुकगता भव । यावत् ते मङ्गलसमालब्धं अङ्गं क्रियताम् । ) [67]

**शकुन्तला** – उचितं, इदं पि बहुमणिदव्वं, दुल्लहं दाणिं मे सहीमण्डणं भविस्सदि । ( रुदत्युत्तिष्ठति ) ( उचितमिदमपि बहुमन्तव्यम् । दुर्लभम् इदानीं मे सखीमण्डनं भविष्यति । ) [68]

**उभे** – सहि, ण दे इच्छिदव्वे मङ्गलकाले रोइदव्वं । ( सखि, न त एष्टव्ये मङ्गलकाले रोदितव्यम् ) [69]

( अश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ) [70]

**प्रियंवदा** – आहरणारहं रूपं । अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि । ( आभरणार्हं रूपम् । आश्रमसुलभैः प्रसाधनैर्विप्रक्रियते । ) [71]

।। ततः प्रविशत उपायनहस्तावृषिकुमारकौ ।। [72 ]

**ऋषिकुमारौ** – इदमलङ्करणम् । तावदलङ्क्रियताम् अत्रभवती । ( तथा विलोक्य विस्मिताः ) [73]

**गौतमी** – वच्छ हारीद, कुदो एदं । ( वत्स हारीत, कुत एतत् । ) [74]

**प्रथमः** – तातकण्वप्रसादात् । [75]

**गौतमी** – किं माणसी सिद्धी । ( किं मानसी सिद्धिः । ) [ 76 ]

**द्वितीयः** – न खलु । श्रूयताम् – तत्रभवता वयमाज्ञापिताः । शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति । तत इदानीं, [ 77 ]

क्षौमं केनचिद् इन्दुपाण्डुतरुणा माङ्गल्यमाविष्कृतं,
निष्ठ्यूतश्चरणोपभोगसुभगो लाक्षारसः केनचित् ।

---

[8] का.-पाठेषु "यथानिर्दिष्टपरिवारा0" इति वर्तते । अन्याश्च तापस्योऽपि रंगभूमिं समागत्य विविधा आशिषो वितरन्ति, ततश्च ता रंगाद् बहिर्गच्छन्ति । सर्वन्तन्निराकृत्य पुनर्गठितः ( उक्ति-क्रमांकाः-61तः 64 पर्यन्तः ) पाठ्यांशः प्रस्तावितः । यतो हि- का.-दाक्षि.-देव.-पाठेषु नैकमप्याशीर्वचनं गौतमी भणति । ( केवलं मै.-बं.-पाठयोराशीर्वचनं गौतमी ददाति । ) अत्र, कथं विना सखिद्वयेन शकुन्तलया नद्यां निमज्जनमपि कृतमित्याश्चर्यं जनयति परम्परागतः पाठः । सख्यागमनात्पूर्वम् अन्याभिस्तापसीभिः शकुन्तलायै "भर्तुर्बहुमता भव", "वीरप्रसविनी भव", "महादेवीशब्दमधिगच्छे"त्यादय आशिषो वितीर्यन्ते- तदपि सूचयति यन्मूलपाठे तापसीनां प्रवेशविषये कश्चित् प्रक्षेपः स्यात् ।

[9] मालविकाग्निमित्रस्य "स्वागतं देव्यै" ( अंक-1) इति प्रयोगाच्चतुर्थ्यैव संस्कृतच्छायानुवादः करणीयः ।

अन्येभ्यो वनदेवताकरतलैर् आपर्वमूलोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायाप्रतिस्पर्धिभिः ।। **4 – 5** ।। [ 78 ]

**प्रियंवदा** – ( शकुन्तलां विलोक्य ) हला, अब्भुदसम्पत्ति सूइदा । भट्टिणो गेहे अणुभविदव्वा दे राअलच्छी । ( हले अद्‌भुतसम्पत्तिस्सूचिता । भर्तुर्गृहेऽनुभवितव्या ते राजलक्ष्मीः । ) [ 79 ]

**शकुन्तला** – ( लज्जां निरूपयति ) सहि, कल्याणिणी दाणिं सि । कोडरसम्भवा विअ महुअरी पुक्खरमुहं अहिलससि[10] । ) ( सखि, कल्याणिनीदानीमसि । कोटरसम्भवेव मधुकरी पुष्करमुखम् अभिलषसि[11] । )[ 80 ]

**ऋषिकुमारः** – गौतम, एहि अभिषेकाद् अवतीर्णाय तातकण्वाय वनस्पतिसेवां निवेदयावः । [ 81 ]

**द्वितीयः** – एवं कुर्वः ।[12] ( इति निष्क्रान्तौ ) [ 82 ]

**प्रियंवदा** – ( मण्डयन्ती ) अणुभूदभूसणो अअं जणो । चित्तकम्मपरिचएण दाणिं दे अङ्गेसु आहरण-णिओअं करेदि । ( अननुभूतभूषणोऽयं जनः । चित्रकर्मपरिचयेनेदानीं तेऽङ्गेषु आभरण--नियोगं करोति । ) [ 83 ]

**शकुन्तला** – ( सस्मितम् ) जाणे वो णिउणत्तणं । ( जाने वो निपुणत्वम् । ) [ 84 ]

( उभे नाट्येनाभरणम् आमुञ्चतः ) [ 85 ]

।। ततः प्रविशति स्नानोत्थितः कण्वः ।। [ 86 ]

**कण्वः** – ( निश्श्वस्य )

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया
कण्ठस्तम्भितबाष्पवृत्तिकलुषं चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ।। **4 – 6** ।।[ 87]

( परिक्रामति ) [88 ]

**सख्यौ** – हला सउन्तले, अवसिदमण्डनासि । परिधेहि संपदं इमं पवित्तं खोमणिम्मोअं । ( हले, शकुन्तले, अवसितमण्डनासि । परिधेहि साम्प्रतम् इमं पवित्रं क्षौमनिर्मोकम् । ) [ 89 ]

( शकुन्तला लतागृहान् निर्गत्य परिधाय,
पुनः प्रविश्योपविष्टा । कण्व उपसर्पति । ) [ 90 ]

**गौतमी** – एसो दे आनन्दवप्फपरिवाहिणा चक्खुणा परिस्सजन्तो विअ गुरू उवत्थिदो । ता आआरं से पडिवज्ज । ( एष ते आनन्दबाष्पपरिवाहिना चक्षुषा परिष्वजन्निव गुरुरुपस्थितः । तद् आचारमस्य प्रतिपद्यस्व । ) [ 91 ]

**शकुन्तला** – ( उत्थाय सव्रीडम् ) ताद वन्दामि । ( तात वन्दे ) [ 92 ]

**कण्वः** – वत्से,

---

[10] अत्र का.-पाठानुसारिणी संवादमाला स्वीकर्तव्येति मतिः । क्षौमं केनचिदिति श्लोकानुसन्धाने समागता प्रियंवदाया उक्तिरियं प्रियंवदायाः सख्यं परां कोटिं नयति । दाक्षि.-देव.-पाठयोः प्रियंवदायाः सद्भावनायाः परिरक्षा पाठपरिवर्तनेन क्रियते । किन्तु मै.-बं.-पाठयोस्तु कृतैरन्यैः परिवर्तनैः प्रियंवदायाः सख्यं निर्मलम् उदात्तञ्च यथा स्यात्तथा न प्रतिपाद्यते । आन्तरिक-सम्भवनाविहीनानि तयोः पाठयोः परिवर्तनानि दृश्यन्ते ।

[11] प्रियंवदाया वाक्येऽस्मिन् "( मदर्थे त्वम् ) अभिलषसी"ति किञ्चिदध्याहृतं पदं वर्तते ।, शकुन्तलायाः कृते प्रयुक्तमिदं "मधुकरी"त्युपमानं तस्याः प्रतीकान्तरं भवति, यस्य च षष्ठांके "तृषितापि सति मधुकरी त्वया विना न पिबती"ति श्लोके पुनरुल्लेखः क्रियते । नायक-नायिकयोः कृते भ्रमर-मधुकर्योः प्रतीके स्याताम् ।

[12] बंगीय-पाठानुरोधादुक्तिद्वय( 81-82 )मत्र स्थापितम्, कण्वप्रवेशात्पूर्वम् ( उचितकालक्षेप-प्रदर्शनाय ) तयोर्निष्क्रमणं समीचीनं सिध्यति ।

ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुं समाप्नुहि ।। **4 – 7** ।। [ 93 ]

**गौतमी** – भअवं, वरो खु एसो, ण आसिसा । ( भगवन्, वरः खल्वेष, न आशीः । ) [94]

**कण्वः** – वत्से, इतः सद्यो हुतान् अग्नीन् प्रदक्षिणीकुरुष्व । ( सर्वे परिक्रामन्ति ) [95]

अमी वेदिं परितः क्लृप्तधिष्ण्या-
स्समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः ।
अपघ्नन्तो दुरितं हव्यगन्धैर्
वैतानास्त्वां वह्नयः पालयन्तु ।। **4 – 8** ।। [ 96]

( शकुन्तला प्रदक्षिणीकरोति ) [ 97 ]

**कण्वः** – वत्से, प्रतिष्ठस्वेदानीम् । ( सदृष्टिक्षेपम् ) क्व ते शाङ्र्गरवमिश्राः । [98]

( प्रविश्य ) भगवन्, इमे वयम् । [99]

**कण्वः** – शाङ्र्गरव, भगिन्या मार्गम् आदेशय । [100 ]

**शाङ्र्गरवः** – इत इतो भवती । ( सर्वे परिक्रामन्ति ) [ 101 ]

**कण्वः** – वत्से शकुन्तले, विज्ञाप्यन्ताम् सन्निहितदेवतास्तपोवनतरवः । [ 102 ]

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवान् ।
आद्ये वः कुसुमप्रबोधसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ।। **4 – 9** ।। [103]

**।। नेपथ्ये ।।**

रम्यान्तरः[13] कमलकीर्णजलैस्सरोभि-
श्छायाद्रुमैर्नियमितार्कमयूखतापः ।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः ।। **4 – 10** ।।[ 104 ]

( सर्वे सविस्मयम् आकर्णयन्ति ) [ 105 ]

**शाङ्र्गरवः** – *अनुमतगमना शकुन्तला सा*
*तरुभिरियं वनवासबन्धुभिः ।*
*परभृतरसितं प्रियं यदा*
*प्रतिवचनीकृतमेभिरात्मनः*[14] ।। **4 – 11** ।। [106]

**गौतमी** – जादे, णादिजणसिणिद्धं अब्भणुण्णादगमणासि तवोवणदेवदाहिं । ता पणम भअवदीओ ।
( जाते ज्ञातिजनस्निग्धम् अभ्यनुज्ञातगमनासि तपोवनदेवताभिः । तत्प्रणम भगवतीः । ) [107]

**शकुन्तला** – ( तथा कृत्वा ) ( परिक्रम्य जनान्तिकम् ) हला पिअंवदे, अय्यउत्तदंसणोस्सुआए वि अस्समं

---

[13] पुरोगामिनि श्लोके कण्वेन संनिहितदेवतास्तपोवनतरूनुद्दिश्य याभ्यर्थना प्रकटीकृता, तामेवानुसृत्याचिरान् नेपथ्यतः श्लोकोऽयं समागच्छेदिति समीचीनम् । मैथिल-रंगकर्मिभिरत्र कोकिलरवः प्रस्तावितः । किन्तु विना कयापि रंगसूचनया कोकिलरवः प्रकटीकर्तुं शक्यते । अतो नास्त्यत्र श्लोक-क्रमांके परिवर्तनस्यावश्यकता ।

[14] पद्यमिदं केवलमपरवक्त्र-छन्दसि स्यात्, वा डॉ. रिचार्ड मतेन संयोजितछन्दसि । ( अपरवक्त्रं पुष्पिताग्रा चेति द्वयोश्छन्दसोः संमिश्रणम् ) किन्तु विवादास्पदोऽयं श्लोकः । नेपथ्यतः कोकिलरवमुत्पादयितुं मैथिल-रंगकर्मिभिरयं प्रक्षिप्तः स्यादित्यनुमीयते । यतो हि गौतमी यद्वक्ति तेन सहैव "रम्यान्तरः0" इति श्लोकस्य संगतिः सिध्यति । अन्यथाऽनुमतगमन-विषये पुनरुक्तिर्भवति ।

परिच्चअन्तीए दुक्खदुक्खेण मे चलणा पुरदोमुहा पहवन्ति । ( हले प्रियंवदे, आर्यपुत्रदर्शनो-त्सुकयाऽप्याश्रमं परित्यजन्त्या दुःखदुःखेन मे चरणौ पुरतोमुखौ प्रभवतः । ) [ 108 ]

**प्रियंवदा** – ण केवलं तवोवणविरहकादरा तुमं य्येव । जाव तए उवत्थिअविओअस्स तवोवणस्स वि अपेक्खं अवत्थन्तरं । तधा अ,

उल्लदिदव्वकवला मई, परिसन्त-णच्चणा मोरी ।
ओसरिअ-पण्डुपत्ता धुअन्ति अङ्गाइ व लदाओ ।। **4 – 12** ।।

( न केवलं तपोवनविरहकातरा त्वमेव[15], यावत् त्वयोपस्थितवियोगस्य तपोवनस्या-प्यवेक्ष्यम् अवस्थान्तरम् । तथा च, [ 109]

उद्गीर्णदर्भकवला मृगी, परिश्रान्तनर्तना मयूरी ।
अपसृतपाण्डुपत्रा धुन्वन्त्यङ्गानीव लताः[16] ।। **4 – 12** ।। ) [ 110 ]

**शकुन्तला** – ( स्मृत्वा ) ताद, लदाबहिणीअं णवमालिअं दाव आमन्तयिस्सं । ( तात, लताभगिनीं नवमालिकां तावद् आमन्त्रयिष्ये । ) [111]

**कण्वः** – अवैमि तेऽस्यां सोदरस्नेहम् । इमां तावद् दक्षिणेनामन्त्रयताम् । [112]

**शकुन्तला** – ( लतामुपेत्यालिङ्ग्य च ससस्नेहगद्गदम् ) चूदसंगदा वि पच्चालिंग मं इदोगदाहिं साहाबाहुहिं । अज्ज पहुदि दूरवट्टिणी खु अहं दे भविस्सं । ( चूतसंगतापि प्रत्यालिङ्ग मामितो गताभिः शाखाबाहुभिः । अद्य प्रभृति दूरवर्तिनी खल्वहं ते भविष्यामि । ) [113]

**कण्वः** – वत्से, इयमिदानीं चिन्तनीया मे । पश्य, [114 ]

सङ्कल्पितं प्रथममेव मया तवार्थे
भर्तारमात्मसदृशं सुकृतैर्गता त्वम् ।
चूतेन संगतवती नवमालिकेयम्
अस्यामहं त्वयि च सम्प्रति वीतचिन्तः[17] ।। ।। **4 – 13** ।। [115 ]

**शकुन्तला** – ( सख्यावुपेत्य ) एसा दोण्हं पि हत्थे णिक्खेवो । ( एषा द्वयोरपि हस्ते निक्षेपः । ) [116 ]

**सख्यौ** – ( सास्रम् ) अअं जणो दाणिं कस्स सन्दिट्ठो । ( रुदतः ) ( अयं जनः इदानीं कस्य सन्दिष्टः ।) [117]

**कण्वः** – अनसूये, अलं रुदित्वा । ननु भवतीभ्यामेव शकुन्तला स्थापयितव्या । ( परिक्रामन्ति ) [118]

**शकुन्तला** – ( विलोक्य ) ताद एसा उडजपय्यन्तचारिणी गब्भमन्थरा मअवहू जदा आसण्णपसविणी भवे तदा मे किं पि पिअं णिवेदइत्तअं विसज्जइस्सध । ( तात, एषोटजपर्यन्तचारिणी गर्भमन्थरा मृगवधू-र्यदासन्नप्रसविणी भवेत् तदा मे कम् अपि प्रियं निवेदयितारं विसर्जयिष्यथ । ) [119]

**कण्वः** – वत्से, नेदं विस्मरिष्यति । ( शकुन्तला गतिभङ्गं निरूपयति ) [ 120]

---

[15] मै.-बं.-पाठानुरोधाद्वाक्यमिदं दीयते ।, का.-पाठे "न केवलं तव विरहपर्युत्सुकास्सख्य एवे"ति । ( किन्तु शकुन्तलायाः पूर्वोक्ति(108)मनुलक्ष्य मैथिल-पाठ एव समीचीनः प्रतीयते । )

[16] का.-पाठेष्वितः परं माधवीलतामुद्दिश्य संवादमाला वर्तते, किन्तु कण्वाश्रमे नासीदेतादृशी कापि लतेति पूर्वमेवोक्तम् । अतः प्रक्षिप्तत्वेन सा संवादमालात्र निष्कासिता ।, एवञ्च, सहकारेण सह तु नवमालिका स्वयंवरवधूत्वेन संलग्नेति पूर्वमेव कथितम् । तर्हि कथं "कान्तं समीपसहकारमहं करिष्य" इति कण्वो वक्तुं पारयेत ? । अनेनापि तस्या माधवीलतायाः प्रक्षिप्तत्वं दृढीभवति ।

[17] का.-पाठेषु माधवीलतायाः सन्दर्भं निष्कास्यात्र दाक्षिणात्यपाठमवलम्ब्य ( उक्ति-क्रमांकः 111तः आरभ्य, 115 पर्यन्तः ) पाठ्यांशः पुनर्गठितः ।

**शकुन्तला** – को णु खु एसो मादक्कन्तो विअ पुणो पुणो वसणस्स अन्तं गण्हदि । ( को नु खलु एष मात्राक्रान्त इव पुनःपुनर्वसनस्यान्तं गृह्णाति । ) [ 121 ]

**कण्वः** – वत्से,

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति,
सोऽयं न पुत्रककृतः पदवीं मृगस्ते ।। **4 – 14** ।।[ 122]

**शकुन्तला** – ( दृष्ट्वा ) वच्छ, किं मं सहवासपरिच्चाइणिं केदवसिणेहं अण्णेससि । अचिरपसूदो वरदाए जणणिए विणा वड्ढिदोसि । इदाणिं पि मए विरहिदं तुमं तादो चिन्तइस्सदि । ता पडिणिअत्तसु । ( रुदती प्रस्थिता ) ( वत्स, किं मां सहवासपरित्यागिनीं कैतवस्नेहाम् अन्वेषसि । अचिरप्रसूतो--परतया जनन्या विना वर्द्धितोऽसि । इदानीमपि मया विरहितं त्वां तातः चिन्तयिष्यति । तत् प्रतिनिवर्तस्य । ) [ 123]

**कण्वः** – वत्से,

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्ति-
र्बाष्पं कुरु स्थिरतरं विहितानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति ।। **4 – 15** ।। [124]

**शार्ङ्गरवः** – आ उदकान्तात् स्निग्धोऽनुगम्यत इति स्मर्यताम् । तदिदं सरस्तीरम् । अत्र संदिश्य ततः प्रतिगन्तुमर्हसि ।[ 125]

**कण्वः** – तेन हीमां क्षीरवृक्षच्छायाम् आश्रयामः । ( उपविश्य ) ( सर्वे तथा कृत्वा तिष्ठन्ति । ) [126 ]

**कण्वः** – ( अपवार्य ) किं नु खलु तत्रभवतो दुःषन्तस्य युक्तरूपम् अस्माभिस्संदेश्यम् । [127 ]

( चिन्तयति ) [ 128 ]

**अनसूया** – सहि, ण सो अस्समे चिन्तणिज्जो अत्थि । जो तए विरहअन्तीए ण उस्सुओकदो अज्ज, पेक्ख दाव, ( सखि, न स आश्रमे चिन्तनीयोऽस्ति यस्त्वया विरहयन्त्या नोत्सुकीकृतोऽद्य । प्रेक्षस्व तावत् – [129]

पडमिणीपत्तन्तरिदं वाहरिदं णाणुवाहरदि जाअं ।
मुहोउब्भोढमिणालो तयि दिट्ठिं देइ चक्काओ ।। **4 – 16** ।।
( पद्मिनीपत्रान्तरितां व्याहृतां नानुव्याहरति जायाम्[18] ।
मुखोद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्रवाकः ।। **4 – 16** ।। ) [ 130 ]

**शकुन्तला** – ( विलोक्य ) सहि, सच्चं य्येव णलिणीपत्तन्तरिदं पिअं सहअरं अवेक्खन्ती आदुरं चक्कवाइ आरसदि, दुक्करं खु अहं करेमि । ( सखि, सत्यमेव नलिनीपत्रान्तरितं प्रियं सहचरम् अप्रेक्षन्ती आतुरं चक्रवाक्यारसति, दुष्करं खल्वहं करोमि[19] । ) [ 131]

**प्रियंवदा** –
अज्ज वि विणा पिएण गमअदि राइं विसूरणा[20]दीहं ।
हन्त गुरुअं पि दुक्खं आसाबन्धो सहावेदि ।। **4 – 17** ।।
( अद्यापि विना प्रियेण गमयति रात्रिं विसूरणादीर्घाम् ।
हन्त गुरुकमपि दुःखम् आशाबन्धस्सहयति ।। **4 – 17** ।। ) [132]

---

[18] डॉ. बेलवालकरमतेन निसर्गकन्यायाः शकुन्तलाया भाग्ये किं लिखितं वर्तते, तच्चक्रवाकेनानेन संसूच्यते ।

[19] सखिद्वयेन पित्रा च शकुन्तलायै शापवृत्तान्तः संगोपितः । किन्तु निसर्गकन्यायै चक्रवाकः कथयति ।

[20] खिदेर्जूर-विसूरौ । ( हेम. 8-4-132 ) इत्यनेन ज्ञायते यत् खेदार्थकोऽयं देश्यशब्दः । स च संरक्षणीयः ।

**कण्वः** – शाङ्गर्रव, इति त्वया मद्वचनाद् राजा शकुन्तलाम् पुरस्कृत्य वक्तव्यः। [133]

**शाङ्गर्रवः** – आज्ञापयतु भगवान्। [134]

**कण्वः** – अस्मान् साधु विचिन्त्य संयमधनान् उच्चैः कुलं चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां भावप्रवृत्तिं च ताम्।
सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं, न खलु तत्स्त्रीबन्धुभिर्याच्यते ।। **4 – 18** ।। [135 ]

**शाङ्गर्रवः** – गृहीतस्सन्देशः। [136]

**कण्वः** – ( शकुन्तलां प्रति ) वत्से, त्वमिदानीमनुशासनीया। पश्य, वनौकसोऽपि लोकज्ञा वयम्। [137]

**शाङ्गर्रवः** – भगवन्, न खलु धीमतां कश्चिद् अविषयो नाम। [ 138]

**कण्वः** – वत्से, सा त्वम् इतः पतिकुलम् अवाप्य,
शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ।। **4 – 19** ।।[139]
किं वा गौतमी ब्रवीति। [140]

**गौतमी** – इत्तिअं खु य्येव एदं वहूअणे उवदेसो। ( शकुन्तलां प्रति ) जादे, एवं खु अवधारेहि। ( एतावत् खलु एवैतद् वधूजन उपदेशः। जाते, एवं खल्ववधारय। ) [141]

**कण्वः** – वत्से, एहि परिष्वजस्व मां सखीजनं च। [ 142 ]

**शकुन्तला** – ताद, किं इदो य्येव पिअसहिओ णिअत्तन्ति।( तात, किं इत एव प्रियसख्यौ निवर्तेते। ) [143]

**कण्वः** – वत्से, इमे अपि प्रदेये। तन्न युक्तमनयोस्तत्रागन्तुम्। त्वया सह गौतमी यास्यति। [144 ]

**शकुन्तला** – ( उत्थाय पितरमालिङ्ग्य ) कधं दाणिं तादेण विरहिदा करिसत्थपरिब्भट्ठा करेणुआ विअ पाणा धारइस्सं।

( इति रोदिति )

( कथमिदानीं तातेन विरहिता करिसार्थपरिभ्रष्टा करेणुकेव[21] प्राणान् धारयिष्ये। ) [ 145 ]

**कण्वः** – किमेवं कातरासि। [146]
अभिजनवतो भर्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणम् आकुला।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजं न त्वं वत्से शुचं गणयिष्यसि ।। **4 – 20** ।।[ 147 ]
अपि चे[22]दमवधारय – [148]

[21] मै.-आदिपाठेषु "मलयपर्वतोन्मूलितेव चन्दनलता0" इत्युपमा शकुन्तलायाः कृते प्रयुक्ता। सा चोपमा पश्चात् कालिकी पाठान्तरत्वेन च प्रविष्टा दृश्यते। केवलं का.-पाठे सा शकुन्तला करिसार्थपरिभ्रष्टया करेणुकया सहोपमीयते। एतादृश्येवोपमा सुसंगता प्रतीयते। यतो हि- हिमगिरेरुपत्यकायां कण्वाश्रमस्य समीपवर्तिनि प्रदेश एव हस्तिसमूहो वर्तते। नास्ति तत्र चन्दनलतायाः कोऽप्यवकाशः। एवञ्च, करिसार्थ-परिभ्रष्टा करेणुका यथा निःसहाया दयनीया भवति, तथैव शकुन्तलेदानीं भविष्यतीति ध्वनयितु-मियम् इवोपमा सन्दर्भोचिता। अत्रैवास्त्यान्तरिकी सम्भावना।

यदा शरीरस्य शरीरिणश्च
पृथक्त्वम् एकान्तत एव भावि ।
आहार्ययोगेन विभज्यमान परेण
को नाम भवेद् विषादी[23] ।। **4 – 21** ।। [149]
( शकुन्तला पितुः पादयोः पतति । ) [150]

**कण्वः** – वत्से, यदिच्छसि तत् तेऽस्तु । [151]
**शकुन्तला** – ( सख्यावुपगम्य ) हला एध दुवे य्येव मं समं परिस्सजधं । ( एतं द्वे एव मां समं परिष्वजेथाम् । ) [152]
**उभे** – ( तथा कृत्वा ) सहि, सो राआ जदि पच्चभिण्णाणमन्थरो भवे, तदा से इमं तदीअ-णामधेअङ्किदं अङ्गुलीअं दंसेढि । ( इत्यङ्गुलीयकं दत्तः ) ( सखि, स राजा यदि प्रत्यभिज्ञानमन्थरो भवेत् तदास्येदं तदीयनामधेयाङ्कितमङ्गुलीयकं दर्शय । ) [153]
**शकुन्तला** – ( साशङ्कम् ) इमिणा सन्देसेण अणुकम्पिदम्हि । ( अनेन सन्देशेनानुकम्पितास्मि । ) [154]
**उभे** – मा भाआहि । सिणिहो वामं आसङ्कदि ( मा भैषीः । स्नेहो वामम् आशङ्कते । ) [ 155]
**शाङ्र्गरवः** – ( ऊर्ध्वम् अवलोक्य ) युगान्तरमधिरूढस्सविता । तत् त्वरतां भवती । [ 156]
**शारद्वतः** – ( उत्थाय ) इत इतो भवती । ( सर्वे परिक्रामन्ति ) [ 157 ]
**शकुन्तला** – ( भूयः पितरमाश्लिष्य सगद्गदम् ) ताद, कदा णु खु भूओ तवोवणं पेक्खिस्सं । ( तात, कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये । ) [158]
**कण्वः** – वत्से, श्रूयताम् –

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौःषन्तिम् अप्रतिरथं तनयं प्रसूय ।
तस्मिन् निवेशितधुरेण सहैव भर्त्रा
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् ।। **4 – 22** ।।[ 159]

**गौतमी** – जादे, परिहीअदि गमणवेला । ता णिवट्टेहि पिदरं । ( काश्यपं प्रति ) अध वा, चिरेण एसा पिदरं ण णिवट्टयिस्सदि । ता णिवट्टदु भवं । ( जाते परिहीयते गमनवेला । तन्निवर्तय पितरम् । अथ वा, चिरेण एषा पितरं न निवर्तयिष्यति । तन्निवर्तयतु भवान् । ) [ 160 ]
**कण्वः** – वत्से, उपरुद्ध्यते मे तपोऽनुष्ठानम् । प्रतिनिवर्तितुमिच्छामि ।[ 161 ]

( शकुन्तला पुनः पितरमाश्लिष्य ) [ 162 ]

**शकुन्तला** – तवोवापारेण तादो णिरुक्कण्ठो भविस्सदि । अहं दाणिं उक्कण्ठाभाइणि संवुत्ता । ( तपो--व्यापारेण तातो निरुत्कण्ठो भविष्यति । अहमिदानीं उत्कण्ठाभागिनी संवृत्ता । ) [163]
**कण्वः** – अयि, किं मां जडीकरोषि । [ 164]

शममेष्यति मम वत्से कथमिव शोकस्त्वया रचितपूर्वम् ।

---

[22] समुच्चयार्थकस्य "अपि चे"ति निपातद्वयस्य स्वारस्यमत्रापि सिध्यति । तद्यथा- शकुन्तला पतिगृहे कीदृशानि सुखानि प्राप्स्यतीत्युक्त्वा, कण्वाश्रमेऽस्मिन् यदा कदापि पितुः शरीररूपमाहार्यं परावर्त्यते, परिवर्त्यतेऽथवा ( तस्य देहावसानमपि जातमिति श्रूयते ) तदापि विषादो नैव कर्तव्य इत्यप्यारण्यकः पितोपदिशति । कन्यानां मनस्सु सदैव पतिकुलचिन्तया सममेव पितृकुलस्यापि चिन्ता वरीवर्तते एव । कण्वमहर्षिरितज्-जानाति, तच्च "अपि चे"ति निपातेनावतारितेन श्लोकेन महाकविर्निरूपयति ।
[23] शृङ्गारप्रकाशे ( 21-16, पृ. 1082 ) उद्धृतोऽयं श्लोकः । ( किन्तु श्रीरेवाप्रसादद्विवेदिभिर्नैवाकलितोऽयं कालिदासीय-श्लोकः )

उटजद्वारविरूढं नीवारबलिं विलोकयतः ।। **4 – 23** ।। [165 ]
वत्से, गच्छ । शिवास्ते पन्थानस्सन्तु । [166]

( इति निष्क्रान्ता शकुन्तलाऽनुयायिभिः सह ) [ 167 ]

**सख्यौ** – ( चिरं विलोक्य ) हद्धी अन्तरिदा सउन्तला वणराइहिं । ( हा धिक्, अन्तरिता शकुन्तला वनराजिभिः । ) [ 168 ]

**कण्वः** – अनसूये, गता वां सहधर्मचारिणी, निगृह्यतां शोकावेगः । अनुगच्छतं मां प्रस्थितम् । [169]

**उभे** – तात, सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसामो । ( तात, शकुन्तलाविरहितं शून्यमिव तपोवनम् प्रविशामः । ) [ 170]

**कण्वः** – स्नेहवृत्तिरिव दर्शनीया । ( सविमर्शं परिक्रम्य ) [ 171]
हन्त भोः, शकुन्तलां विसृज्य लब्धमिदानीं स्वास्थ्यम् । कुतः – [172]

अर्थो हि कन्या परकीय एव
ताम् एव सम्प्रेष्य परिगृहीतुः ।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपम्[24] इवार्पयित्वा ।। **4 – 24** ।।[173]

( इति निष्क्रान्ताः सर्वे ) [174]

**।। इति चतुर्थोऽङ्कः ।।** [175]

[24] शकुन्तलया नवमालिकाविषये पूर्वमुक्तं यद् "एष द्वयोरपि हस्ते निक्षेप" ( उक्ति-क्रमांकः 116 ) इति । तेनात्रापि "निक्षेप" इत्येव स्यात् । कृतिनिष्ठेनान्तरिकेण प्रमाणेन सिध्यति यदत्र "न्यास" इति पाठान्तरम् अकालिदासीयम् । ( विक्रमोर्वशीये ( 2-13 इत्यस्याधस्ताद् ) अपि निक्षेपशब्दस्यैव प्रयोगात्, कालिदासस्य कृतिषु च धरोहरेत्यर्थे न्यासशब्दस्य प्रयोगाभावाच्च । )

**।। अथ पञ्चमोऽङ्कः ।।**

।। ततः प्रविशति कञ्चुकी ।।[ 1 ]

**कञ्चुकी** – ( आत्मानं विलोक्य ) ( निःश्वस्य ) अहो बत कीदृशीं वयोऽवस्थां प्राप्तोऽस्मि । [ 2 ]

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
कालेन सैव परिहीननियोगशक्ते-
र्गन्तुं ममेयम् अवलम्बनवस्तु जाता ।। **5 – 1** ।।[ 3 ]

यावद् अभ्यन्तरगताय देवायानुष्ठेयम् अकालक्षेपार्हं निवेदयामि । ( द्वे पदे गत्वा ) किं पुनस्तत् । ( संस्मृत्य ) आम्, कण्वशिष्याः तपोधना देवं द्रष्टुम् इच्छन्ति । भोश्चित्रम् इदम् – [ 4 ]

क्षणात्प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ।। **5 – 2** ।।[ 5 ]

( परिक्रम्याकाशे ) [ 6 ]

मौद्गल्य, धर्मकार्यमनतिपात्यं, तद्देवस्य तदावेदयितुमिच्छामि । किं ब्रवीषि ।नन्विदानीमेव धर्मासनाद् उत्थितः पुनरुपरुध्यते देव इति । न त्वीदृशो लोकतन्त्राधिकारः । पश्य,[ 7 ]

भानुस्सकृद् युक्ततुरङ्ग एव
रात्रिन्दिवं गन्धवहः प्रयाति ।
अवेक्ष्य दाह्यं न शमोऽस्ति वह्ने-
ष्षष्ठांशवृत्तेरपि धर्म एषः ।। **5 – 3** ।।[ 8 ]

किं ब्रवीषि । तेन सङ्गीतकशालासङ्गतं मण्डपं गच्छ, अनुष्ठीयतां नियोग इति । यावत् तत्र गच्छामि । ( परिक्रम्यावलोक्य च ) एष देवः ।[ 9 ]

मनुः प्रजास्स्वा इव तन्त्रयित्वा
निषेवते शान्तमना विविक्तम् ।
यूथानि संचार्य रविप्रतप्तः शीतं
दिवा स्थानमिव द्विपेन्द्रः ।। **5 – 4** ।।[ 10 ]

( ततः प्रविशत्यासनस्थः परिमितपरिवारो राजा विदूषकश्च )[11 ]

**विदूषकः** – ( कर्णं दत्त्वा ) भोः णं सङ्गीदसालअं । तेण अवधानं देहि । तालगतिविसुद्धाए खु वीणाए सरसञ्ञोआ सुणीअन्ति । जाणे तत्थभोदी हंसवदिआ वण्णपरिचअं करेदित्ति । ( भोः, ननु सङ्गीतशालकम् । तेनावधानं देहि । तालगतिविशुद्धायाः खलु वीणायाः स्वरसंयोगाः श्रूयन्ते । जाने तत्रभवती हंसवतिका वर्णपरिचयं करोतीति । )[12 ]

**राजा** – ( आकर्णयन् ) माधव्य, तूष्णीं भव, यावद् आकर्णयामि । [13 ]

**कञ्चुकी** – अये, व्यासक्तचित्तो देवः । अवसरं तावत् प्रतिपालयामि । ( विलोकयन् स्थितः)[14]

**( नेपथ्ये गीयते )**[ 15 ]

अहिणव-महुलोहभाविदं तह परिचुम्बिअ चूदमञ्जरिं ।
कमलवसतिमेत्तणिव्वुदो महुअर वीस्सरदो सि णं कधं ।। **5 – 5** ।।
( अभिनव-मधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम् ।
कमलवसतिमात्रनिर्वृतो मधुकर विस्मृतोऽस्येनां कथम् ।। **5 – 5** ।। ) [ 16 ]

**राजा** – अहो रागपरिवाहिणी गीतिः । [ 17 ]

**विदूषकः** – किं दाव से गीतिआए । अविगिहिदो भवदा अक्खरत्थो ।( किं तावदस्या गीतिकायाः, अपि गृहीतो भवताक्षरार्थः । )[ 18 ]

**राजा** – ( स्मितं कृत्वा ) वयस्य, सत्कृतप्रणयोऽयं[1] जनः । तदस्याः कृते कुलप्रभाम्[2] अन्तरेण समुपालम्भम् उपागतोऽस्मि ।तन्मद्वचनाद् उच्यतां हंसवतिका । निपुणम् उपालब्धास्स्म इति ।[19]

**विदूषकः** – जं भवं आणवेदि । ( उत्थाय ) भो वअस्स । गिहीदो तए परकीहिं हत्थेहिं सिखण्डए अच्छभल्लो अवीदराअस्स विअ णत्थि मे मोक्खो । ( यद् भवान् आज्ञापयति । भो वयस्य,गृहीतस्त्वया परकीयैर्हस्तैः शिखण्डके भल्लूकः । अवीतरागस्येव नास्ति मे मोक्षः । )[20]

**राजा** – वयस्य, गच्छ, नागरकवृत्त्या संज्ञापयैनाम् । [21]

**विदूषकः** – का गदी । ( का गतिः । )

( इति निष्क्रान्तः )[22]

**राजा** – ( आत्मगतम् ) किं नु खलु गीतमाकर्ण्येदम् एवं विधार्थमिष्टजनविरहाद् ऋतेऽपि बलवदुत्कण्ठितो-ऽस्मि । अथवा, [ 23 ]

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्युत्सुकीभवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनम्अभोगपूर्वम्
भाविस्थितानि जननान्तरसौहृदानि[3] ।। **5 – 6** ।।[ 24]

**कञ्चुकी** – ( उपसृत्य ) ( प्रणिपत्य ) जयतु जयतु देवः । एते खलु हिमगिरेरुपत्यकारण्यकाः कण्वसन्देशम् आदायसस्त्रीकास्तपस्विनस्सम्प्राप्ताः । श्रुत्वा प्रभविष्णुः प्रमाणम् । [ 25 ]

**राजा** – किं कण्वसन्देशहारिणः सस्त्रीकाः तपस्विनः । [ 26 ]

**कञ्चुकी** – अथ किम् । [ 27 ]

**राजा** – तेन हि, मद् वचनाद् विज्ञाप्यताम् उपाध्यायस्सोमरातः । अमूनाऽऽश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हसि । अहमप्येनांस्तपस्विदर्शनोचिते देशे प्रतिपालयामीति ।[28]

**कञ्चुकी** – यद् आज्ञापयति देवः । ( इति निष्क्रान्तः )[ 29 ]

**राजा** – ( उत्थाय ) वसुमति, अग्निशरणम् आदेशय ।[ 30 ]

**प्रतीहारी** – इदो इदो देवः । ( परिक्रामन्ती ) ( इतः इतः देवः । )[ 31 ]

**राजा** – ( अधिकारखेदं रूपयित्वा ) सर्वाः प्रार्थितमधिगम्य सुखी सम्पद्यते, राज्ञां तु चरितार्थतापि दुःखोत्तरैव । कुतः – [ 32 ]

औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ।। **5 – 7** ।।[ 33 ]

( **नेपथ्ये** )

---

[1]मै.-पाठेषु "सकृत्कृतप्रणयोऽयमि"ति पाठान्तरम् । किन्तु तेन नाटकस्यास्य नायकस्योदात्तता नितरां व्याहन्यते ।, का.-पाठेनानेन तस्य रक्षा भवति । एवञ्च, प्राचीनतमत्वादपि का.-पाठो विचारणीयोऽस्ति ।

[2]मै.-बं.-पाठयोरत्र "हंसवतीमि"ति पाठान्तरम् ।, अन्यत्र ( का.-दाक्षि.-देव. ) पूर्वपरिणीतायाः कुलप्रभायाः / वसुमत्याश्च नामान्तरं प्राप्यते । द्विविधयोः पाठयोर्मध्ये को ज्यायान्निति निश्चेतुं सुकरं न प्रतीयते । उभयत्र विवादः कर्तुं शक्यते । तथापि मै.-बं.-पाठयोर्विवादं दूरीकर्तुं प्रयत्यत इति संशितिः ।

[3]का.-पाठस्यात्र स्वीकारः क्रियते, प्राचीनतमत्वानुरोधादर्थान्तरस्य प्रतिपादकत्वाच्च । बहुपत्नीकत्वे सत्यपि राज्ञि, प्रणयस्यास्यापूर्वत्वं निरूपयितुं प्रवृत्तत्वाच्च कवेः । काश्मीर-पाठोऽनुपेक्ष्यः । षष्ठांकेऽपि न वर्तते पूर्वपरिणीतानां संघर्षः, विदूषकोऽपि तम् "अन्तःपुरकालकूट / कलह / वागुरादि"शब्दैः न निरूपयति । )तस्यापि समीक्षाऽपेक्षतेतराम् ।।

**वैतालिकाः** – विजयतां देवः ।[ 34 ]

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ।। **5 – 8** ।।[ 35 ]

अपि च,

नियमयसि विमार्गप्रस्थितान् आत्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम
त्वयि तु परिसमाप्तं बन्धुकृत्यं प्रजानाम् ।। **5 – 9** ।।[ 36 ]

**राजा** – ( आकर्ण्य ) एते क्लान्तमनसः पुनर्नवीभूतास्स्मः[4] । ( परिक्रम्य )[37]

**प्रतीहारी**– एसो अहिणवसम्मज्जनरमणीओ सण्णिहिदकविलधेणू अग्गिसरणालिन्दो । ता आरुहदुदेवो । ( एषोऽभिनव सम्मार्जनरमणीयस्सन्निहितकपिलधेनुरग्निशरणालिन्दः । तदारोहतु देवः । )[38]

**राजा** – ( आरोहणं नाटयित्वा ) ( परिजनांसावलम्बी तिष्ठति ) ( सवितर्कम् ) वसुमति, किम् उद्दिश्य तत्रभवता कण्वेन मत्सकाशम् ऋषयः प्रहितास्स्युः । [39]

किं तावद् व्रतिनाम् उपोढतपसां विघ्नैस्तपो दूषितं
धर्मारण्यगतेषु केनचिद् उत प्राणिष्वसच्चेष्टितम् ।
आहोस्वित् प्रसवो ममापचरितैर्विष्टम्भितो वीरुधाम्
इत्यालीढबहुप्रतर्कम् अपरिच्छेदाकुलं मे मनः ।। **5 – 10** ।।[ 40 ]

**प्रतीहारी** – देवस्स भुअणपरिसङ्गणिव्वुदे चतुरस्समे कुदो एदं । किं तु सुअरिदाभिणन्दिणो इसओ देवं सभाजइदुं आगदित्ति तक्केमि । ( देवस्य भुवनपरिष्वङ्गनिर्वृते चतुराश्रमे कुत एतत् । किन्तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुम् आगता इति तर्कयामि । )[ 41 ]

( ततः प्रविशन्ति गौतमीसहिताः शकुन्तलां पुरस्कृत्य मुनयः ।
पुरतश्चैषां पुरोहित-कञ्चुकिनौ । )[ 42 ]

**कञ्चुकी** – इत इतो भवन्तः । ( सर्वे परिक्रामन्ति )[ 43 ]

**शार्ङ्गरवः** –
महाभागस्सत्यं नरपतिरभिन्नस्थितिरसौ
न कश्चिद् वर्णानाम् अपथम् अपकृष्टोऽपि भजते ।
तथापीदं शश्वत् परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव ।। **5 – 11** ।।[ 44 ]

**शारद्वतः** – स्थाने भवतः पुरप्रवेशाद् इत्थंभूतस्संवेगः । अहमपि,[ 45 ]

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, प्रबुद्ध इव सुप्तम् ।
बद्धमिव स्वैरगतिर्जनम् अवशस्सङ्गिनमवैमि ।। **5 – 12** ।।[ 46 ]

**शकुन्तला** – ( दुर्निमित्तं सूचयन्ती ) ( सखेदम् ) अम्मो, किं पिवामेदरं मे णअणं विप्पकरेदि । ( अहो किम् अपि वामेतरं मे नयनं विप्रकरोति । )[ 47 ]

**गौतमी** –पडिहदं अमङ्गलं । सुहाइं दे भत्तु-कुलदेवदाओ विदरन्तु । ( परिक्रामन्ति ) ( प्रतिहतम् अमङ्गलं, सुखानि ते भर्तृकुलदेवता वितरन्तु । )[ 48 ]

---

[4]का.-पाठे येन क्रमेण दृश्य-योजना सुरक्षिता वर्तते, तामेवात्राङ्गीकृता । तद्यथा- 1. कञ्चुकिन उक्तयः, 2. हंसवतिकाया-गीतम्, 3. वैतालिकानां श्लोक-गानं, क्लान्तमनसो राज्ञो नवीकरणम्, 4. कण्वशिष्यानाम् शकुन्तलया सह प्रवेशः ।

**पुरोहितः** – ( राजानं निर्दिशन् ) भोस्तपस्विनः । असावत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति । पश्यतैनम् । [ 49 ]

**ऋषयः**– महाब्राह्मण, काममेतद् अभिनन्दनीयम् । तथापि वयमत्र मध्यमस्थाः । कुतः – [50 ]

भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धतास्सत्पुरुषास्समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ।। **5 – 13** ।।[51]

**प्रतीहारी** – देव, पसण्णमुहराआ दीसन्ति सत्थकय्या इसओ । ( देव, प्रसन्नमुखरागा दृश्यन्ते स्वस्थकार्या ऋषयः । )[ 52 ]

**राजा** – ( शकुन्तलां दृष्ट्वा ) अथात्रभवती – [ 53 ]

कास्विद् अवगुण्ठनवती
नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां किसलय-
मिव पाण्डुपत्राणाम् ।। **5 – 14** ।।[ 54 ]

**प्रतीहारी** – देव, कुदूहलदाए विम्हिदम्हि । ण मे तक्को पसीददि । ( देव, कुतूहलतया विस्मितास्मि । न मे तर्कः प्रसीदति । )[ 55 ]

**परिजनः** – भट्टा, दंसणीआ खु से आकिदी लक्खीअदि । ( भर्तः, दर्शनीया खल्वस्या आकृतिर्लक्ष्यते । ) [56]

**शकुन्तला** – ( आत्मगतम् ) ( उरसि हस्तं दत्त्वा ) ( ससाध्वसम् ) हिअअ, किं एवं वेवसि । अय्यउत्तस्स भावत्थिदिं सुमरिअ धीरं दाव होहि ।( हृदय, किमेवं वेपसि । आर्यपुत्रस्य भावस्थितिं स्मृत्वा धीरं तावद् भव । )[ 57 ]

**पुरोहितः**– ( पुरो गत्वा ) देव, एते विधिवदर्चितास्तपस्विनः । कश्चिदेतेषाम् उपाध्यायसन्देशः । तं देवः श्रोतुम् अर्हति ।[ 58 ]

**राजा** –( सादरम् ) अवहितोऽस्मि । [ 59 ]

**ऋषयः**– ( उपसृत्य ) ( हस्तान् उद्यम्य ) विजयस्व राजन् । [ 60 ]

**राजा** –( सप्रणामम् ) सर्वान् अभिवादये वः ।[ 61 ]

**ऋषयः** –स्वस्ति भवते । [ 62 ]

**राजा**–अपि निर्विघ्नं तपः । [ 63 ]

**ऋषयः**–कुतो धर्मक्रियाविघ्नस्सतां रक्षितरि त्वयि ।
तमस्तपति घर्मांशौ कथम् आविर्भविष्यति ।। **5 – 15** ।।[ 64 ]

**राजा**–अर्थवान् मे खलु राजशब्दः । अथ तत्रभवाल्लँलोकानुग्रहाय कुशली कण्वः ।[ 65 ]

**शाङ्गरवः** – स्वाधीनकुशलास्सिद्धिमन्तः । स भवन्तमनामयप्रश्नपूर्वम् इदम् आह ।[ 66 ]

**राजा**–किम् आज्ञापयति ।[ 67 ]

**शाङ्गरवः** – ( शकुन्तलाम् उद्दिश्य ) यन् मिथस्समयाद् इमाम् मदीयां दुहितरम् उपयेमे । तन्मया प्रीतमनसायुवयोरनुज्ञातम् । कुतः – [ 68 ]

त्वमर्हतां प्राग्रहरः स्मृतो हि नः,
शकुन्तला मूर्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं
चिरस्य वाच्यं न गतः प्रजापतिः ।। **5 – 16** ।।[ 70 ]

तदियम् इदानीं आपन्नसत्त्वा प्रतिगृह्यतांसहधर्मचारणायेति ।[ 71 ]

**गौतमी** – भद्दमुह, वत्तुकामा त्थिदा म्हि । ण अ मे वअणावकासो अत्थि । कधं त्ति – [ 72 ]

णावेक्खिदो गुरुअणो इमा इणा इह पुच्छिदा बन्धू ।
एक्केक्कमेण वरिए किं भण्णतएक्कम् एक्कमि ।। **5 – 17** ।।

( भद्रमुख, वक्तुकामा स्थिताऽस्मि । न च मे वचनावकाशोऽस्ति । कथमिति –

नापेक्षितो गुरुजनो,ऽनया न चात्र पृष्टा बन्धवः ।
एकैकेन वरिते किं भण्यताम् एकम् एकस्मिन् ।। **5 – 17** ।। )[ 73 ]

**राजा** – ( साशङ्काकुलम् आकर्ण्य) अयि, किमिदम् उपन्यस्तम् ।[ 74 ]

**शकुन्तला**– ( आत्मगतं,साशङ्कम् ) हुं पावो से वअणोवक्खेवो । ( हुँ, पावकोऽस्य वचनोपक्षेपः । )[75]

**शाङ्र्गरवः** – कथं नाम अत्रभवन्त एव सुतरां लोकयात्रानिष्णाताः ।[76 ]

सतीमपि ज्ञातिकुलैकसंश्रयाम्
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते तद्
अप्रियापि प्रमदा स्वबन्धुभिः ।। **5 – 18** ।।[ 77 ]

**राजा** –किम् अत्रभवती मया परिणीतपूर्वा ? ।[ 78 ]

**शकुन्तला** – ( सविषादमात्मगतम् ) हिअअ, संवदिदा खु दे आसङ्का । ( हृदय, संवर्द्धिता खलु त आशङ्का । )[ 79 ]

**शाङ्र्गरवः** – राजन् ! ,
किं कृतकार्यद्वेषाद् धर्मं प्रति विमुखता राज्ञः ।[ 80 ]

**राजा**–कुतोऽयम् असत्कल्पनाप्रसङ्गः ? । [ 81 ]

**शाङ्र्गरवः** – मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तेषु ।। **5 – 19** ।।[ 82]

**राजा**–विशेषेणाधिक्षिप्तोऽस्मि ।[ 83 ]

**गौतमी** – ( शकुन्तलां प्रति ) जादे, मा मुहुत्तअं लज्ज, अवणयिस्सं दाव दे अवगुण्ठनं । तदो भट्टा तुमं अहिजाणइस्सदि त्ति । ( जाते, मा मुहूर्तकं लज्जस्व । अपनेष्यामि तावत् तेऽवगुण्ठनम् । ततो भर्ता त्वाम् अभिज्ञास्यतीति । ) [ 84 ]

( गौतमी यथोक्तं करोति )[ 85]

**राजा**–( शकुन्तलां निर्वर्णयन् सविस्मयम् आत्मगतम् )[ 86]

इदमुपनतमेवं रूपम् अक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्न वेत्यध्यवस्यन् ।
भ्रमर इव विभाते कुन्दमन्तस्तुषारम्
न च खलु परिभोक्तुं नापि शक्नोमि हातुम् ।। **5 – 20** ।।[ 87 ]

**परिजनः** – ( जनान्तिकम्)अहो धम्मावेक्खिदा भट्टिणो । ईदिसं णाम सुहोवणदं इत्थीरदणं पेक्खिअ को अण्णोविआरेदि । ( अहो धर्मापेक्षिता भर्तुः । ईदृशं नाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति । )[ 88 ]

**शाङ्र्गरवः** – राजन्, किम् एवम् जोषम् आस्यते ? ।[ 89 ]

**राजा**–भोस्तपस्विन्, चिन्तयन्नपि न खलु स्वीकरणम् अत्रभवत्याः स्मरामि ।तत्कथमनभिव्यक्त-सन्धिलक्षणम् आत्मानं क्षेत्रिणम् अनाशंसमानः प्रतिपत्स्ये ।[ 90 ]

**शकुन्तला**– ( अपवार्य ) हद्धी कधं परिणए य्येव सन्देहो । भग्गा दाणिं मे दूरारोहिणी आसा । ( हा धिक्, कथं परिणय एव सन्देहः । भग्नेदानीं मे दूरारोहिण्याशा । )[ 91 ]

**शाङ्र्गरवः** –मा तावत् ।

कृताभिमर्शाम् अवमन्यमान-
स्सुतां त्वया नाम मुनिर्विमान्यः ।
जुष्टं प्रतिग्राहयता स्वम् अर्थं
पात्रीकृतो दस्युरिवासि येन ।। **5 – 21** ।।[ 92 ]

**शारद्वतः** – शाङ्र्गरव, विरम त्वमिदानीम् । शकुन्तले, वक्तव्यमुक्तमस्माभिः । सोऽयमत्रभवान् इदमाह । तद् दीयताम् अस्मै प्रतिवचनम् ।[ 93 ]

**शकुन्तला** – अय्यउत्त[5] ......, ( इत्यर्धोक्ते ) ( आर्यपुत्र ....... । ) [ 94]

**(आत्मगतम्** ) अधवा, संसइदो दाणिं मे समुदाआरो । (अथवा, संशयितो इदानीं मे समुदाचारः । )[ 95 ]

( **प्रकाशम्** ) पोरव, जुत्तं णाम पुरा अस्समपदे सब्भावुत्ताण हिअअं इमं जणं समयपुरवं पदारिअ, इदिसेहिं अक्खरेहिं पच्चाचक्खिदुं । ( पौरव, युक्तं नाम पुराश्रमपदे सद्भावोत्तान-हृदयम् इमं जनं समयपूर्वम् प्रतार्येदृशैरक्षरैः प्रत्याख्यातुम् । )[ 96 ]

**राजा**–( कर्णौ स्पृष्ट्वा ) शान्तंपापम् । [ 97 ]

व्यपदेशम् आविलयितुं किम्
ईहसे माम् च पातयितुमास्त ।
कूलङ्कषेवसिन्धुः प्रसन्न-
-मोघं तटरुहं च ।। **5 – 22** ।।[ 98 ]

**शकुन्तला** – जदि परमत्थदो परपरिग्गहणसङ्किणा तए एवं वुत्तं । दा अहिण्णाणेण गुरुणा तुह सन्देहं अवनइस्सं । ( यदि परमार्थतः परपरिग्रहणशङ्किना त्वयैवमुक्तम् । तदभिज्ञानेन गुरुणा तव सन्देहम् अपनेष्यामि । )[ 99 ]

**राजा**–उदारम् । [100]

**शकुन्तला** –( मुद्रास्थानम् परामृश्य ) हद्धी, अङ्गुलीअसुण्णा मे अङ्गुली । ( तापसीं पश्यति ) ( हा धिक्, अङ्गुलीयशून्या मेऽङ्गुली । )[101]

**गौतमी**–ण खु दे सक्कावदारे सचितित्थोदअं अवगाहमाणाए पब्भट्ठो अङ्गुलीओ । ( न खलु ते शक्रावतारे शचीतीर्थोदकम् अवगाहमानायाः प्रभ्रष्टोऽङ्गुलीयकः । ) [102]

**राजा**– ( सस्मितम् ) इदम् तद् यौतुकं प्रत्युपन्नं स्त्रीणाम् इति यदुच्यते ।[103 ]

**शकुन्तला** – एत्थ दाव विहिणा दंसिदं पहुत्तणं, अवरं दे कधयिस्सं । ( अत्र तावद्विधिना दर्शितं प्रभुत्वम्, अपरं ते कथयिष्यामि । )[ 104 ]

**राजा** –श्रोतव्यमिदानीं संवृत्तम् । [ 105 ]

**शकुन्तला** – ण खु तत्थइक्कदिअसे णवमालिआमण्डवके णलिणीपत्तभाअणगदं उदअं तव हत्थसण्णिहिदं आसी ।( न खलु तत्रैकदिवसे नवमालिकामण्डपके नलिनीपत्रभाजनगतमुदकं तव हस्तसन्निहितम् आसीत् । ) [ 106 ]

**राजा** – शृणुमस्तावत् ।[ 107 ]

**शकुन्तला** – तक्खणं च मम सो किदअपुत्तओ हरिणओ उवत्थिदो । तदो तए अअं दाव पढुमं पिवदु त्ति अणुकम्पिणा उवच्छन्दिदो । ण उण दे अवरिइदस्स हत्थब्भासो उवगदो । पच्छा तस्सिं य्येव

---

[5]इतः पूर्वम्- शकुन्तलायाः स्वगतोक्तिरूपेण"इदं अवत्थान्तरं गदे तादिसे मुहुत्तरागे, किं वा सुमराविदेण सम्पदंतेण । अधवा, अत्ता दाणिं मे सोधणीओत्थि,विवदिस्सं एदं।" इति यद्वाक्यं वर्तते, तत्प्रक्षिप्तं प्रतिभाति ।

उदएमए गिहीदे पणअपकासपुरवंतुमं पहसिदो सि, भणिदं च तए, सव्वो सगन्धे विससिदि, दुवेविएत्थआरण्णआ त्ति। ( तत्क्षणं च मम स कृतकपुत्रको हरिणक उपस्थितः। ततस्त्वयायं तावत् प्रथमं पिबत्वित्यनुकम्पिनोपच्छन्दितः। न पुनस्तेऽपरिचितस्य हस्ताभ्यास उपगतः। पश्चात् तस्मिन्नेवोदके मया गृहीते, प्रणयप्रकाशपूर्वं त्वंप्रहसितोऽसि, भणितं च त्वया सर्वस्सगन्धे विश्वसिति। द्वावप्यत्रारण्यकाविति। ) [ 108 ]

**राजा**–( विहसन् ) एभिरात्मकार्यनिर्वत्तिनीनां योषितामनृतवाङ्मधुभिराकृष्यन्ते विषयिणः।[109]

**गौतमी** – महाभाअ, णारहसि इत्तिकं मन्तइदुं। तवोवणसंवड्ढिदो खु अअं जणो अणभिण्णो केदवस्स। ( महाभाग, नार्हस्येतावन्मन्त्रयितुम्। तपोवनसंवर्द्धितः खलु अयं जनोऽनभिज्ञः कैतवस्य। )[110]

**राजा**–तापसवृद्धे,

स्त्रीणामशिक्षितपटुत्वम् अमानुषीषु
सन्दृश्यते किम् उत याः परिबोधवत्यः।
प्राग् अन्तरिक्षगमनात् स्वम् अपत्यजातम्
अन्यद्विजैः परभृतः किल पोषयन्ति॥ **5 – 23**॥[ 111 ]

**शकुन्तला** – ( सरोषम् ) अणय्य[6], अत्तणो हिअआणुमाणेण सव्वं पेक्खसि। को अण्णो धम्मकञ्चुअपवेसिणो तणच्छणन्नकूवोपमस्स तवाणुकारी भविस्सदि।( अनार्य, आत्मनो हृदयानुमानेन सर्वं प्रेक्षसे, कोऽन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकारीभविष्यति। ) [ 112 ]

**राजा**–भद्रे[7], दुःषन्तचरितं प्रजासु प्रथितम्।न चापीदं दृश्यते[8]।[115]

**शकुन्तला** –सुट्ठु दाव सच्छन्दआरिणी कदम्हि जा अहं इमस्स पुरुवंसपच्चएण हिअअसत्थधारस्स मुहमहुणो हत्थब्भासं उवगदा। ( सुष्ठु तावत् स्वच्छन्दचारिणी कृतास्मि, याहं अस्य पुरुवंशप्रत्ययेन हृदयशस्त्रधरस्य मुखमधुनो हस्ताभ्याशम् उपगता। )[117]

( इति मुखमावृत्य रोदिति। ) [118]

**शाङ्र्गरवः**– इत्थम् अप्रतिहतं चापलं दहति। अतः खलु,[ 119 ]

परीक्ष्य सर्वं कर्तव्यं विशेषात् संविदः क्रियाः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्॥ **5 – 25**॥[120 ]

**राजा**–अयि भोः, किमत्रभवतीप्रत्ययाद् एवास्मान् अतिबलेन क्षिण्वन्ति भवन्तः।[121]

**शाङ्र्गरवः** –श्रुतं भवद्भिरधरोत्तरम्। [ 122 ]

आ जन्मनः शाठ्यम् अलक्षितो यः,
तस्याप्रमाणं वचनं जनस्य।
पराभिसन्धानमधीयते यैर्
विद्येतिते सन्तु किलाप्तवाचः॥ **5 – 26**॥[ 123 ]

**राजा**–हन्त भोस्सत्यवादिन्, अभ्युपगतं तावदस्माभिः। एवं विधावयम्। किं पुनरिमाम् अभिसन्धाय लभ्यते।[124]

**शारद्वतः** – विनिपातः।[ 125 ]

---

[6]का.-पाठे नास्तीदं पदम्। मै.-पाठे सुरक्षितमिदं संबोधनं प्रसंगोचितं प्रतिभाति। अतोऽत्रेदं स्वीक्रियते।
[7]इतः पूर्वम्- स्वगतोक्तिरूपेण राज्ञो मुखे "न तिर्यगवलोकि चक्षुरतिलोहितं केवल0" इति श्लोकः प्राप्यते, किन्तु पूर्वापरसन्दर्भे सो न प्रासंगिकः प्रतीयते। अतो निष्कास्यते। ( प्रक्षिप्त-श्लोक-संख्या- 22 )
[8]का.-मै.-बं.-पाठेष्वितः परं "तुम्हे य्येव पमाणं जाणीध0" इति प्राकृत-गाथा। ( प्रक्षिप्त-श्लोक-संख्या-23 )

**राजा**– तं नाहं प्रार्थये । [ 126 ]
**शारद्वतः** – भो राजन्, किमुत्तरोत्तरैः, अनुष्ठितगुरुनिदेशाः स्मः । सम्प्रतिप्रतिनिवर्तामहेवयम्,[127]

तदेषा भवतः पत्नी त्यज वैनां गृहाण वा ।
उपयन्तुर्हि दारेषु प्रभुता सर्वतोमुखी ।। **5 – 27** ।।[ 128 ]

गौतमि,गच्छ गच्छाग्रतः । ( सर्वे प्रस्थिताः )[ 129 ]
**शकुन्तला** – ( सदैन्यम् ) हुं इमिणा दाव केतवेण विप्पलब्धम्हि । तुम्हे वि मं परिच्चइदुमिच्छध । ता कागदी ।( इति गौतमीम् अनुगच्छति । ) ( हुं अनेन तावत् कैतवेन विप्रलब्धाऽस्मि । यूयमपि मां परित्यक्तुम् इच्छथ, तत्का गतिः । )[ 130 ]
**गौतमी**– ( स्थित्वा ) वच्छ साङ्गरव, अणुगच्छदि एसा करुणपरिदेविणी सउन्तला । पच्चादेसकलुसे भत्तारे किंवा पुत्तिआ मे करेदु । ( वत्स शाङ्र्गरव, अनुगच्छत्येषा करुणपरिदेविणी शकुन्तला प्रत्यादेशकलुषे भर्तरि किं वा पुत्रिका मे करोतु । )[ 131 ]
**शाङ्र्गरवः** – ( पुरोधसा संज्ञितः प्रतिनिवृत्त्य) आः पुरोभागे, किम् इदम् स्वातन्त्र्यम् अवलम्ब्यते ।[132]
( शकुन्तला भीता वेपते )[ 133 ]
**शाङ्र्गरवः** – शृणोतु भवती ।[ 134 ]

यदि यथा वदति क्षितिपस्तथा
त्वम् असि किं पितृशोकदया त्वया ।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम् ।। **5 – 28** ।।[ 135 ]

तिष्ठ, साधयामो वयम् । [ 136 ]
**राजा** –भोस्तपस्विन् , किमत्रभवतीम् विप्रलभसे । पश्य, [ 137 ]

कुमुदान्येव शशाङ्क-
स्सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रह-
संश्लेषपराङ्मुखी वृत्तिः ।। **5 – 29** ।।[ 138 ]

**शाङ्र्गरवः** – राजन्, अथ पूर्वपरिग्रहोऽन्यासङ्गाद् विस्मृतो भवेत्, तदा कथम् अधर्मभीरुः । [ 139 ]
**राजा**– ( सोमरातं प्रति[9] ) भवन्तम् एव गुरुलाघवं प्रक्ष्यामि । [ 140 ]

मूढः स्याम् अहमेषा वा वदेन् मिथ्येति संशये ।
दारत्यागी भवाम्यहो परस्त्रीस्पर्शपांसुलः ।। **5 – 30** ।।[ 141 ]

**पुरोधाः** –देव, विचारय, यदि तावद् एवम् क्रियते ।[142 ]

**राजा** –अनुशास्तु मां भवान् ।[ 143 ]

**पुरोधाः** – अत्रभवती तावद् आप्रसवाद् आपन्नसत्त्वा मद्गृहे तिष्ठतु । भूतमिदम् उच्यते – त्वं साधुभिरादिष्टः प्रथमं चक्रवर्तिनं जनयिष्यसीति । स चेन्मुनिदौहित्रस्तल्लक्षणोपपन्नो भविष्यति इति ततःप्रतिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसीति । विपर्यये पितुरस्यास्समीपगमनम् उपस्थितम् एव ।[144]

**राजा**–यथा गुरुभ्यो रोचते ।[ 145 ]

**पुरोधाः**– वत्से, अनुगच्छ माम् । [ 146 ]
**शकुन्तला** –( रुदती )भअवदि वसुहे, देहि मे विअरं । ( भगवति वसुधे, देहि मे विवरम् । )[147]

---
[9]इयमस्मद्-योजना ।

( इति निष्क्रान्ता सह सकलैः पुरोधसा च ) [148 ]

**राजा**–( शापव्यवहितस्मृतिः शकुन्तलाम् एव चिन्तयति । ) [149 ]

**।। नेपथ्ये ।।**

आश्चर्यम् आश्चर्यम् ।[ 150 ]

**राजा**–( कर्णं दत्त्वा ) किं नु खलु स्यात् । [ 151 ]

( प्रविश्य **पुरोहितः** )देव, अद्भुतम् खलु संवृत्तम् ।[ 152 ]

**राजा** –किमिव ।[ 153 ]

**पुरोधाः**–परिवृत्तेषु कण्वशिष्येषु,

सा निन्दन्ती स्वानि भाग्यानि
बाला बाहूत्क्षेपं क्रन्दितुं च प्रवृत्ता ।[ 154 ]

**राजा** –किं च, [ 155 ]

**पुरोधाः**– स्त्रीसंस्थानं चाप्सरस्तीर्थमाराद्
आक्षिप्यैव ज्योतिरेनाम् तिरोऽभूत् ।। **5 – 31** ।।[156]

( सर्वे विस्मिताः )[157]

**राजा** –भगवन्, प्रागेव सोऽस्माभिरर्थः प्रत्यादिष्ट एव। किं वृथा तर्केणान्विष्टेन । विश्रमामि ।[158]

**पुरोधाः**–विजयस्व । ( इति निष्क्रान्तः )[ 159 ]

**राजा**–( सखेदम् ) वसुमति, पर्याकुलोऽस्मि । शयनभूमिम् आदेशय ।[ 160 ]

**प्रतीहारी**–( सादरम् ) इदो इदो देवो । ( इत इतो देवः । ) ( परिक्रामति )[162 ]

**राजा** –( आत्मगतम् )

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत् तु दूयमानं प्रत्यायतीव सा हृदयम् ।। **5 – 32** ।।[ 163]

**( इति निष्क्रान्ताः सर्वे )**[164]

**।। इति पञ्चमोऽङ्कः ।।**

## ।। षष्ठोऽङ्कः ।।

( ततः प्रविशति नागरिकस्यालः, पश्चाद् बद्धं पुरुषमादाय रक्षिणौ च ) [ 1 ]

**रक्षिणौ** – ( पुरुषं ताडयित्वा ) अले कुम्भिलआ, कहेहि कहिं तए एशे महामणिपत्थलुक्किण्ण णामक्खले लाअकीअङ्गुलीअए समासादिदे । ( अरे कुम्भिलक, कथय कुत्र त्वयैषा महामणिप्रस्तरोत्कीर्ण-नामाक्षरो राजकीयाङ्गुलीयकस्समासादितः । ) [ 2 ]

**पुरुषः** – ( भयं नाटयित्वा ) पसीदन्तु पसीदन्तु भादुअमिस्सा । हगे खु ईदिसस्स कम्मणो कले ? । ( प्रसीदतु, प्रसीदतु भ्रातृकमिश्राः । अहम् खलु ईदृशस्य कर्मणः कुर्वे ? । ) [ 3 ]

**प्रथमः** – किं णु खु शोहणो बम्हणे त्ति कलिअ लञ्ञा पदिग्गहे दिण्णे । ( किं नु खलु शोभनो ब्राह्मण इति कृत्वा राज्ञा प्रतिग्रहो दत्तः । ) [ 4 ]

**पुरुषः** – जाणअ, दाणिं हगे सक्कावदालवासिके धीवले । ( जानक, इदानीम् अहम् शक्रावतारवासिको धीवरः । ) [ 5 ]

**द्वितीयः** – पाडच्चल, किं खु दे अम्हेहिं जादी पुच्छिदा । ( पाटच्चर, किं खलु तेऽस्माभिर्जातिः पृष्टा । ) [6]

**स्यालः** – सूचअ, कधेदु सव्वं अणुक्कमेण । मा णं अन्तरा पडिबन्धिट्ठ । ( सूचक, कथयतु सर्वमनुक्रमेण । मा एनम् अन्तरा प्रतिबन्धिष्ठ । ) [ 7 ]

**रक्षिणौ** – जं आउत्ते आणवेदि । ( पुरुषं प्रति ) भण भण । [ 8 ]

**पुरुषः** – से हगे जालपडिसादेहिं मश्चबन्धणोवाएहिं कुडुम्बभलणं कलेमि । ( सोऽहं जालपडिसादिभि-र्मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि । ) [ 9 ]

**स्यालः** – ( प्रहस्य ) विशुद्धो दाणिं दे आजीओ । ( विशुद्ध इदानीं त आजीवः । ) [ 10 ]

**पुरुषः** – भट्टा,

सहजं किल जं पि णिन्दिदं ण हि तं कम्म विवज्जणीअए ।
पशुमालककम्म दालुणे अणुकम्पामिदु एव सोत्तिए ।। 6 – 1 ।।
( सहजं किल यदपि निन्दितं न हि तत्कर्म विवर्जनीयकम् ।
पशुमारककर्म्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ।। 6 – 1 ।। ) [11]

**स्यालः** – तदो तदो । ( ततस्ततः ) [ 12 ]

**पुरुषः** – अधेक्कदिअशे खण्डशो लोहिदमच्छे मए कप्पिदे । जाव तस्स उदलब्भन्तला एदं रअण-भासुलं अङ्गुलीअं पेक्खामि ।। पश्चा इध णं विक्कआअ दंशअन्ते गहिदे भावमिश्शेहिं । इत्तिके दाव एदश्श आगमे । अधुणा मालेध कुट्टेध वा । ( अथैकदिवसे खण्डशो रोहितमत्स्यो मया कल्पितः यावत् तस्योदराभ्यन्तर एतद् रत्नभासुरम् अङ्गुलीयकं प्रेक्षे । पश्चाद् इहैतद् विक्रयाय दर्शयन् गृहीतो भावमिश्रैः । एतावान् तावद् एतस्यागमः, अधुना मारयत कर्तयत वा । ) [ 13 ]

**स्यालः** – ( अङ्गुलीयकम् आघ्राय ) जाणअ, मच्छोदरसण्ठिदं ति णत्थि संदेहो । तधा अअं से विसगन्धो, आगमो दाणिं एदस्स विमरिसिदव्वो । ता एध राअउलं येव गच्छम्ह । ( जानक, मत्स्योदर-संस्थितम् इति नास्ति सन्देहः । तथायम् अस्य विस्रगन्धः, आगम इदानीमेतस्य विमर्ष्टव्यः । तद् एतम् राजकुलम् एव गच्छामः । ) [ 14 ]

**रक्षिणौ** – गश्च णाध गण्ठिभेदअ । ( सर्वे परिक्रामन्ति ) ( गच्छ नाथ ग्रन्थिभेदक । ) [ 15 ]

**स्यालः** – सूचअ, इद मं गोउलदुव्वारे अप्पमत्ता पडिवालेद, जाव इमं जहागमं अङ्गुलीअअं भट्टिणो उवणिअ तदीअसासणं पडिच्छअ णिक्कमामि । ( सूचक, इह मां गोकुल[1]द्वारेऽप्रमत्तौ प्रतिपालयतं

---

[1] प्राकृतप्रकाशे "( अयुक्तस्यानादौ ) इत्यधिकारे, कगचजतदपयवां लोपः । ( अ. 2- सू. 2 )" इत्यनेन गोकुल-शब्दात् ककारस्य लोपे सति "गोउल" इति प्राप्यते, यथा बकुलः – बउल इति भवति ।

यावद् इदं यथागमं अङ्गुलीयकं भर्तुरुपनीय तदीयशासनं प्रतीष्य निष्क्रमामि । ) [ 16 ]

**उभौ –** पविसदु आउत्ते सामिपसादाअ । ( प्रविशत्वाबुत्तस्स्वामिप्रसादाय ) [17]

( स्यालो निष्क्रान्तः । ) [18]

**प्रथमः –** जाणआ, चिलाअदि आउत्ते । ( जानक, चिरायत्याबुत्तः । ) [19]

**द्वितीयः –** णं अवशलोवशप्पअणिआ लाआणो । ( ननु अवसरोपसर्पणीया राजानः । ) [ 20 ]

**प्रथमः –** वअश्शा, फुलन्ति मम हत्था इमश्श वशणं पिणद्धुं । ( वयस्य, स्फुरतो मम हस्तावस्य व्यसनं पिनद्धुम् । ) [ 21]

( पुरुषं निर्दिशति ) [22]

**पुरुषः –** णालहदि भादुभादुके अकालमालके भविदुम् । ( नार्हति भ्रातृभ्रातृकोऽकालमारको भवितुम् । ) [ 23 ]

**द्वितीयः –** ( विलोक्य ) आगच्छदु अम्हाणं ईशले, पदिगिण्हिअ लाअशाशणं । ( पुरुषं प्रति ) शउलाणं मुहं पेक्खशि, अध वा गिद्धशिआलाणं बली भविश्शशि । ( आगच्छतु अस्माकमीश्वरः, प्रतिगृह्य राजशासनम् । शकुलानां मुखं प्रेक्षसेऽथवा गृध्रशृगालानां बलिर्भविष्यसि । ) [ 24 ]

( प्रविश्य ) **स्यालः –** सिग्घं सिग्धं एदम् । ( इत्यर्धोक्ते ) ( शीघ्रं शीघ्रम् एतम् । ) [ 25]

**पुरुषः –** हा हदे म्हि । ( हा हतोऽस्मि । ) ( इति विषादं नाटयति ) [ 26 ]

**स्यालः –** मुञ्चेध रे मुञ्चेध जालोवजीविणं । उववण्णो से किल अङ्गुलीअअस्स आगमो । अम्हसामिणा येव मे कधिदं । ( मुञ्चतं रे मुञ्चतं जालोपजीविनम् । उपपन्नोऽस्य किल अङ्गुलीयकस्यागमः । अस्मत्स्वामिनैव मे कथितम् । ) [ 27]

**रक्षिणौ –** जं आणवेदि आउत्ते । ( यद् आज्ञापयत्याबुत्तः । ) [ 28]

**प्रथमः –** जमवशदिं गदुअ गुडखण्डं च दइअ पडिणिअत्ते । ( पुरुषं मुञ्चति ) ( यमवसतिं गत्वा, गुडखण्डं च दत्त्वा[2] प्रतिनिवृत्तः । ) [29]

**पुरुषः –** ( पुरुषः स्यालं प्रणम्य ) भट्टा, तव केलके मे जीविदे । ( भर्तः, त्वदीयो मे जीवितः[3] । ) [ 30 ]

**स्यालः –** उत्थेहि । एस भट्टिणा अङ्गुलीअअ-मुल्लसम्मिदो पारितोसको वि दे दाविदो । ( उत्तिष्ठ । एष भर्त्राङ्गुलीयकमूल्यसम्मितः पारितोषिकोऽपि ते दापितः । ) [ 31 ]

**पुरुषः –** ( सहर्षम् प्रगृह्य ) अणुगिहिदो म्हि । ( अनुगृहीतोऽस्मि । ) [ 32 ]

**प्रथमः –** तं णाम अणुगिहिदे जं शूलादो अवदालिअ हत्थिकन्धे पडिच्छिदे । ( तथा नामानुगृहीतो यच्छूलाद् अवतार्य हस्तिस्कन्धे प्रतिष्ठापितः । ) [ 33 ]

**द्वितीयः –** आउत्त, पालिदोस कधेदि महालह-लअणेण तेण अङ्गुलीअएण भट्टिणो पढमबहुमदेण होदव्वम् । ( आबुत्त, पारितोषिकः कथयति महार्घरत्नेन तेनाङ्गुलीयकेन भर्तुः प्रथमबहुमतेन भवितव्यम् । ) [ 34 ]

**स्यालः –** ण अ तस्सिं महालह-लअणं त्ति बहुमाणं भट्टिणो तक्केमि । ( न च तस्मिन् महार्घरत्नम् इति बहुमाणं भर्तुः तर्कयामि । ) [ 35 ]

**उभौ –** किं खु । ( किं खलु ) [ 36 ]

**स्यालः –** तक्केमि तस्स दंसणेण कोवि अहिलइदो जणो भट्टिणा सुमरिदो त्ति, जदो तं [ पेक्खिअ ] मुहूत्तं पकिदिगम्भीरो वि पय्युस्सुअमनो संवुत्तो । ( तर्कयामि तस्य दर्शनेन कोऽप्यभिलषितो जनो भर्त्रा स्मृत इति । यतस्तद् प्रेक्ष्य मुहूर्तं प्रकृतिगम्भीरोऽपि पर्युत्सुकमनास्संवृत्तः । ) [37]

---

[2] का.-पाठ एव यमसदनात्प्रतिनिवर्तनस्य समुपलभ्यतेऽयं हेतुः । स च संग्राह्यः पाठः ।

[3] देव.-पाठ एव "अथ कीदृशो मे आजीव" इति । एतच्चासङ्गतम् ।

**द्वितीयः** – साधु मन्तिदं णाम आउत्तेण । ( साधु मन्त्रितं नामावुत्तेन । ) [38]

**प्रथमः** – णं भणामि इमश्श कदे मच्छालिआ-शत्तुणो त्ति । ( पुरुषं सासूयं[4] पश्यति ) ( ननु भणाम्यस्य कृते मत्स्यलिका-शत्रोरिति । ) [39]

**पुरुषः** – भट्टा, इदो अद्धं तुम्हाणं शुमणोमुल्लं होदु । ( भर्तः, इतोऽर्धम् युष्माकं सुमनोमूल्यं भवतु । ) [40]

**उभौ** – इत्तिके जुज्जदि । ( एतावत् युज्यते । ) [ 41 ]

**स्यालः** – धीवल, महत्तलए हि सम्पदं पिअवअस्सकोसि मे संवुत्तो । कादम्बिलिसक्खिअं च अम्हाणं पढमसोहिदं इच्छिअदि । ता एहि सुण्डिअसालं गच्छम्ह । ( धीवर, महत्तरको हि साम्प्रतं प्रियवयस्यकोऽसि मे संवृत्तः । कादम्बरीसाक्षिकं च अस्माकं प्रथमसौहृदम् इष्यते । तद् एहि शुण्डिकशालां गच्छामः । ) [42]

( इति निष्क्रान्ताः ) [ 43 ]

॥ **प्रवेशकः** ॥ [44]

॥ ततः प्रविशत्याकाशयानेनाऽक्षमाला ॥ [ 45 ]

**अक्षमाला** – णिव्वत्तिदं मए पय्याअणिव्वटत्तणीअं अच्छरा-तित्थ-सण्णीज्झं । ता जाव इमस्स राएसिणो उदन्तं पच्चक्खीकरेमि । मेणआ-सम्बन्धेण सरीरभूदा मे सउन्तला । ताए अ एतण्णिमित्तं य्येव संदिट्ठपूरव म्हि । ( परिक्रम्य पुरस्समन्ताद् अवलोक्य च ) किं णु खु उसवंदिणे वि णिरूसवारम्भं विअ राअउलं दीसदि । अध वा, अत्थि मे विभवो पणिधानेन सव्वं जाणिदुं । किं तु सहिए आदरो मे आणिदव्वो । भोदु, इमाणां दाव उज्जाणवलिणं तिरक्करिणीपच्छण्णा पासपरिवत्तिणी भविअ उवालभिस्से । ( तथा करोति ) । ( निर्वर्तितं मया पर्यायनिर्वतनीयम् अप्सरस्तीर्थसान्निध्यम् । तद् यावद् अस्य राजर्षेरुदन्तं प्रत्यक्षीकरोमि । मेनकासम्बन्धेन शरीरभूता मे शकुन्तला । तया चैतन्निमित्तम् एव सन्दिष्टपूर्वास्मि । किं नु खलूत्सवंदिनेऽपि निरुत्सवारम्भमिव राजकुलं दृश्यते । अथ वास्ति मे विभवः प्रणिधानेन सर्वं ज्ञातुम् । किन्तु सख्यादरो म आनीतव्यः । भवतु, एषां तावदुद्यानपालिनीनां तिरस्करिणी-प्रच्छन्ना पार्श्वपरिवर्तिनी भूत्वोपालभिष्ये । ) [ 46 ]

( ततः प्रविशति चूताङ्कुरम् अवलोकयन्त्युद्यानपालिका[5]
तस्याश्च पृष्टतोऽपरा ) [ 47 ]

**प्रथमा** – कधं उवत्थिदो मधुमासो[6] । [48]

आअम्बहरिअवेण्टं ऊससिअं विअ वसन्तमासस्स ।
दिट्ठं चूअङ्कुरअं छणमङ्गलअं णिअच्छामि[7] ॥ 6 – 2 ॥
आताम्रहरितवृन्तम्[8] उच्छ्वसितमिव वसन्तमासस्य ।

---

[4] एतस्मादेव कारणाद् धीवरः स्वकीयस्य पारितोषिकात् किमपि द्रव्यं रक्षकाय / नागरिकाय प्रददाति ।

[5] का.-पाठेषु सर्वत्र "चेटी"ति प्राप्यते । किन्तु कोकिला मधुमक्षिका चात्रोद्यान-पालिका-रूपेण ते स्त्रीवेश-धारिण्यौ प्रस्ताविते स्यातामिति प्रतीयते, निसर्गप्रधानत्वादस्य नाटकस्य । न स्यातामेते सामान्ये चेट्यौ ।

[6] मैथिल-पाठानुरोधात्स्वीकृतमिदं गद्यवाक्यम् । इत आरभ्य ( 48 उक्ति-क्रमांकात् ) 53 पर्यन्तं पुनर्गठितः पाठ्यांशः प्रायो मैथिलपाठानुसारी दीयते ।

[7] केवलं बं.-पाठे समुपलभ्यते परिशुद्धा पथ्याऽऽर्या, नान्यत्र । अतो बं.-पाठानुरोधादियं प्रदीयते ।

[8] दाक्षिणात्य-पाठेऽत्र "चूतं हर्षितपिककमि"ति नवीनार्या प्रदीयते । ( प्रक्षिप्त-श्लोक-संख्या-24 )

दृष्टम् चूताङ्कुरं क्षणमङ्गलं पश्यामि ।। 6 – 2 ।। [49]

**द्वितीया** – ( उपसृत्य ) हला परहुदिए, किं णेदं एआइणी मन्तेसि । ( हले परभृतिके, किम् इदानीम् एकाकिनी मन्त्रयसि । ) [50]

**प्रथमा** – सहि महुअरिए, चूदकलिअं[9] पेक्खिअ उम्मत्ता परहुदिआ भोदि । तव उण कालो मदविब्भमुग्गीअदाणं । सहि, अवलम्बस्स जाव अग्गपादपडिट्ठापिदा भविअ कामदेवस्स अच्चणं करेमि । ( सखि मधुकरिके, चूतकलिकां प्रेक्ष्योन्मत्ता परभृतिका भवति । तव पुनः कालो मदविभ्रमोद्गीतानाम् । सखि, अवलम्बस्व यावद् अग्रपादप्रतिष्ठापिता भूत्वा कामदेवस्यार्चनं करोमि[10] । ) [51]

**द्वितीया** [11] – जदि ममा वि अद्धं अच्चणअफलस्स । ( यदि ममाप्यर्धम् अर्चनकफलस्य । ) [ 52 ]

**प्रथमा** [12] – हला, अभणीदे पि एदं भोदि । जदो एक्कम् येव णो दुधात्थिदं सरीरम् । ( हले अभणितेऽप्येतद् भवति, यत एकम् एव नो द्विधास्थितं शरीरम् । ) [ 53 ]

( सख्यावलम्बितं कृत्वा[13] चूतभङ्गं नाटयति ) [54]

अम्महे, चूदपसवो एसो बन्धणभङ्गसुरहि वादि । ( कपोतकं कृत्वा ) णमो भअवदे मअरद्धजाअ । ( अहो[14], चूतप्रसव एष बन्धनभङ्ग-सुरभिर्वाति । नमो भगवते मकरध्वजाय । ) [55]

अरिहसि मे चूअङ्कुर दिण्णो कामस्स गहिअधनुअस्स ।
सण्ठविअ-जुवइ-लक्खो पच्छपच्छाखदिदो सरो होदुं ।। **6 -3** ।।
( अर्हसि मे चूताङ्कुर दत्तः कामस्य गृहीतधनो- ।
स्संस्थापितयुवतिलक्षः पश्चात् प्रतिस्खलितश्शरो भवितुम् ।। **6 -3** ।। ) [56]

( चूताङ्कुरं क्षिपति ) [57]

**कञ्चुकी** – ( प्रविश्य रुषितः कञ्चुकी ) मा तावद् अनात्मज्ञे, देवेनाप्रमुखत एव प्रतिषिद्धे वसन्तोत्सवे त्वमत्र मञ्जरीभङ्गम् आरभसे । [58]

**उभे** – ( भीते ) पसीददु अय्यो । अगहीदत्था खु अम्हे । ( प्रसीदत्वार्यः । अगृहीतार्थाः खलु वयम्[15] । )[59]

**कञ्चुकी** – भवतु, पुनर्न एवम् वर्तितव्यम् । [60]

**उभे** – अय्य, कोदूहल्लं जं इमिणा जणेण सोदव्वं ता कधेदु, अय्यो किं णिमित्तं भट्टिणा वसन्तकोमुदी पडिसिद्ध त्ति । ( आर्य, कौतुहल्यं यद् अनेन जनेन श्रोतव्यं तत् कथयत्वार्यः किं निमित्तं भर्त्रा वसन्तकौमुदी प्रतिषिद्धेति । ) [61]

**अक्षमाला** –ऊसवपिआ राआणो । एत्थ गुरुणा कारणेण होदव्वं । ( उत्सवप्रिया राजानः । अत्र गुरुणा

---

9 का.-मै.-बं.-पाठेषु "चूदलतिअं=चूतलतिकामि"ति प्राप्यते । किन्तु आम्रमञ्जरी चूतलतिकेति पदवाच्या न भवति । अतो दाक्षि.-देव.-पाठानुरोधादत्र "चूदकलिअं=चूतकलिकामि"ति स्वीकृतम् ।

10 परभृतिकामवलम्ब्य मधुकरिकावतिष्ठेदित्येव तर्कसंगतं प्रतिभाति । अत्र मैथिल-पाठ एव श्रद्धेयः प्रतीयते ।

11 का.-बं.-दाक्षि.-देव.-पाठेषूक्तिरियं प्रथमाया मुखे वर्तते । तादृशी योजना तु न समीचीना प्रतिभाति ।

12 का.-बं.-दाक्षि.-देव.-पाठेषूक्तिरियं द्वितीयाया मुखे वर्तते । तादृशी योजना तु न समीचीना प्रतिभाति ।

13 मैथिल-पाठे " सख्यवलम्बितकेन नाट्येने " ति ।, बंगीय-पाठे " सख्यामि " ति सप्तमी ।

14 इतः परम् "अप्रतिबुद्धोऽपी"ति शब्दः प्रक्षिप्तः प्रतिभाति । अतश्च निष्कासितः ।

15 का.-मै.-बं.-दाक्षि.-देव.-पाठेष्वितः परं "चूतानां चिरनिर्गतापि कलिका0" इति श्लोकः प्राप्यते । किन्तु 57 87, एवं 89 इत्युक्ति-क्रमांकेषु पूर्वापरविरोधादयं प्रक्षिप्त एवेति सिध्यति । ( प्रक्षिप्त-श्लोक-संख्या-25 )

कारणेन भवितव्यम् । ) [62]

**कञ्चुकी** – बहुलीभूतम् एतत् । तत् किं न कथ्यते । अस्ति भवत्योः कर्णपथम् आयातं शकुन्तलाप्रत्यादेश-कौलीनम् । [63]

**उभे** – अय्य, सुदं रट्ठिअमुहादो जाव अङ्गुलीअअदंसणं । ( आर्य, श्रुतं राष्ट्रियमुखाद् यावद् अङ्गुलीयकदर्शनम् । ) [64]

**कञ्चुकी** – तेन हि स्वल्पं कथयितव्यम् । यदा खलु स्वाङ्गुलीयकदर्शनाद् अनुस्मृतं देवेन सत्यम् ऊढपूर्वा मया रहसि तत्रभवती शकुन्तला । मोहात् प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्तापपरिगतो देवः । [65] कुतः –

रम्यं द्वेष्टि यथासुखं प्रकृतिभि र्न प्रत्यहं सेव्यते
शय्योपान्तविवर्तनैर्विगमयत्युन्निद्र एव क्षपाः ।
दाक्षिण्येन ददाति वाचम् उचिताम् अन्तःपुरेभ्यो यदा
गोत्रेषु स्खलितं तदा भवति च व्रीडा-विलक्ष्यश्चिरम् ॥ **6 – 4** ॥ [66]

**अक्षमाला** – पिअं मे । ( प्रियं मे । ) [ 67]

**कञ्चुकी** – प्रभवतो वैमनस्याद् उत्सवप्रतिषेध इति । [68]

**प्रथमा** – जुज्जदि । ( युज्यते ) [69]

( **नेपथ्ये** ) [70]

एदु एदु भवं । ( एतु एतु भवान् । ) [71]

**कञ्चुकी** – ( कर्णं दत्त्वा ) अयं इत एवाभिवर्तते देवः । तत्स्वकर्मानुष्ठीयताम् । ( इति निष्क्रान्ते चेटिके ) [72]

( ततः प्रविशतः पश्चात्तापसदृशवेषो राजा विदूषकः प्रतीहारी च ) [73]

**कञ्चुकी** – ( राजानम् अवलोक्य ) अहो सर्वास्ववस्थासु रमणीयत्वम् एवाकृतिविशेषाणाम् । समुत्सुकोऽपि शकुन्तलां प्रति प्रियदर्शनो देवः । [74] , यः एषः –

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनम् एकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रतान्तनयनस्तेजोगुणाद् आत्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते ॥ **6 – 5** ॥ [75]

**अक्षमाला** – थाणे खु पञ्चादेसविमाणिदा वि सउन्तला जं इमस्स किदे किल तम्मदि । ( स्थाने खलु प्रत्यादेश-विमानितापि शकुन्तला यदस्य कृते किल ताम्यति । ) [76]

**प्रतीहारी** – एदु एदु महाराओ । ( एतु एतु महाराजः । ) [77]

**राजा** – ( ध्यानमन्दं परिक्रम्य ) [78]

प्रथमं सारङ्गाक्ष्या प्रियया
प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हत-
हृदयं सम्प्रति विबुद्धम् ॥ **6 – 6** ॥[ 79]

**अक्षमाला** – ईदिसाइं से तवस्सिणीए भागधेआइं । ( ईदृशान्यस्यास्तपस्विन्या भागधेयानि । ) [80]

**विदूषकः** – ( अपवार्य ) लङ्घिदो एसो भूओ सउन्तलावादेण । ण आणे कधं किच्छिदव्वो भविस्सदि । ( लङ्घित एष भूयः शकुन्तलावातेन । न जाने कथं चिकित्सितव्यो भविष्यति । ) [81]

**कञ्चुकी** – ( उपगम्य ) जयतु जयतु देवो महाराजः । मया तावद् राज्ञः प्रत्यवेक्षिताः प्रमदवनभूमयः यथाकामम् अध्यास्ताम् विनोदस्थानानि देवः । [82]

**राजा** – ( प्रतीहारीं प्रति ) वसुमति, मद्वचनाद् अमात्यपिशुनं ब्रूहि । चिरप्रबोधान्न सम्भावितम् अस्माभिरद्य धर्मासनमध्यासितुम् । यत् प्रत्यवेक्षितमार्येण पौरकार्यं तत् पत्रकमारोप्य दीयतामिति । [83]

**प्रतीहारी** – जं देवो आणवेदि । ( यद् देव आज्ञापयति । ) ( इति निष्क्रान्ता ) [ 84]

**राजा** – पार्वतायन, त्वमपि स्वनियोगम् अशून्यं कुरु । [85]

**कञ्चुकी** – तथा । ( इति निष्क्रान्तः ) [86]

**विदूषकः** – किदं भवदा णिम्मक्खिअं । सम्पदं सिसिरविच्छेदे रमणीए इमस्सिं पमदवणे सुहं विहरिस्सामो । ( कृतं भवता निर्मक्षिकम् । साम्प्रतं शिशिरविच्छेदे रमणीयेऽस्मिन् प्रमदवने सुखं विहरिष्यामः । ) [ 87]

**राजा** – वयस्य, यदुच्यते रन्ध्रोपरिपातिनोऽनर्था इति, तद् अव्यभिचारि[16] । पश्य, [88]

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे, प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः ।। 6 – 7 ।। [ 89 ]

**विदूषकः** – दिट्ठ जाव । इमं दण्डअं चूदमम्मधए पाडए । ( तिष्ठ यावत् । इमं दण्डकं चूतमन्मथके पातये[17] । ) [90]

**राजा** – ( सस्मितम् ) भवतु, दृष्टं ब्रह्मवर्चसम् । सखे, अत्रोपविष्टः प्रियायाः किंचिद् अनु{प}कारिणीषु लतासु दृष्टिं विलोभयामि । [91]

**विदूषकः** – णं खु भअदा मेधाविणी लिविकरी सन्दिट्ठा । माहवीमण्डवे इमं खणं पडिवालइस्सं । तहिं मे चित्तफलए सुहत्थलिहिदं तत्थभोदीए सउन्तलाए पडिकिदिं आणेहि त्ति । ( ननु खलु भवता मेधाविनी लिपिकरी सन्दिष्टा, माधवीमण्डप इमं क्षणं प्रतिपालयिष्यामि । तत्र मे चित्रफलके स्वहस्तलिखितं तत्रभवत्याः शकुन्तलायाः प्रतिकृतिम् आनयेति । ) [92]

**राजा** – ईदृशं मे हृदयसंस्थानम् । तत् तम् एवादेशय माधवीमण्डपम् ।[93]

**विदूषकः** – एदु भवं । ( परिक्रामतः ) ( एतु भवान् । ) [94]

( अक्षमालाऽनुगच्छति ) [95]

**विदूषकः** – ( विलोक्य ) एसो मणिसिलापट्टकसणाहो माहवीमण्डवको विवित्तदाए णिसद्दं सागदेण विअ पडिच्छदि पिअवअस्सं । उववसिम्ह । णिसीददु भवं । ( उभौ प्रविश्योपविष्टौ ) ( एष मणिशिलापट्टकसनाथो माधवीमण्डपको विविक्ततया निश्शब्दं स्वागतेनेव प्रतिच्छति प्रियवयस्यम् । उपविशामः । निषीदतु भवान् । ) [96]

**अक्षमाला** – ( लतामाश्रित्य स्थिता[18] ) [97]

**राजा** – ( स्मरणमभिनीय ) सखे माधव्य, सर्वम् इदं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्ते, यत् कथितवान् अस्मि भवते, स भवान् प्रत्यादेशदिवसे मत्समीपगो नासीत् । प्रथमममपि न त्वया कदाचित् संकथासु तत्रभवत्याः कीर्तितं नाम । न खलु अहमिव मिथस्संविदं स्मृतोऽसि । [98]

**विदूषकः** – ण विसुमरामि । किं तु सव्वं कहिअ तए [य्ये]व वुत्तं । परिहासविअप्पो एसो, ण भूदत्थो त्ति ।

---

[16] इतः परं "उपहितस्मृतिरङ्गुलीमुद्रया0" इति श्लोकः प्राप्यते, स च प्रक्षिप्तः । ( प्रक्षिप्त-श्लोक-संख्या-26 )
[17] विदूषकस्यानयैवोक्त्या सह पूर्वोक्तश्लोकस्यान्तिमचरणस्य सम्बन्धो वर्तते । न तूपहितस्मृतिरिति श्लोकस्य ।
[18] मैथिल-पाठे "लतासंस्थिता भूत्वा प्रेक्षिष्ये तावत् सख्याः प्रतिकृतिमि" त्यादिभिर्वचनैः स्वस्यागमनस्य प्रयोजनं विनिवेद्यते ।, बंगीय-पाठेऽपि तादृशं वाक्यं श्रूयते ।, काश्मीर-पाठे संक्षेपीकरणस्याशयो दृश्यते ।

रहस्सभेदभीरुणा मए वि मिप्पिण्ड-मन्द-बुद्धिणा तधा येव गिहिदम् । अवि अ, भविदव्वदा बलवदी । ( न विस्मरामि । किन्तु सर्वं कथयित्वा त्वयैव उक्तम् । परिहासविकल्प एष, न भूतार्थ इति । रहस्यभेदभीरुणा मयापि मृत्पिण्डमन्दबुद्धिना तथैव गृहीतम् । अपि च, भवितव्यता बलवती । ) [99]

**अक्षमाला** –एवं णेदं । ( एवमेतत् । ) [100]

**राजा** – ( ध्यात्वा ) सखे, परित्रायस्व माम्, परित्रायस्व माम् । [101]

**विदूषकः** – किं णेदं । ईदिसं उवणदं । कदा उण सप्पुरिषा सोअबद्धधिय्या होन्ति । णं पवादेण वि गिरिओ णिप्पकम्पा । ( किम् एतत् । ईदृशम् उपनतम् । कदा पुनस्सत्पुरुषाः शोकबद्धधैर्या भवन्ति । ननु प्रवातेनाऽपि गिरयो निष्प्रकम्पाः । ) [102]

**राजा** – वयस्य, निराकरणविप्लवायाः प्रियायास्समवस्थाम् अनुस्मृत्य बलवद् अस्वस्थोऽस्मि । [103] सा मया,

ततः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता  
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।  
पुनर्दृष्टिं बाष्पप्रसरकलुषाम् अर्पितवती  
मयि क्रूरे यत् तत् सविषमिव शल्यं दहति माम् ।। **6 – 8** ।। [104]

**अक्षमाला** – अम्महे, ईदिसी कट्ठावत्था । इमस्स सन्तावेण अहं रमे । ( अहो ईदृशी कष्टावस्था । अस्य सन्तापेनाहं रमे । ) [ 105]

**विदूषकः** – अत्थि देव तक्को । केण तत्थभोदी आकासगामिणा अवहित त्ति । ( अस्ति देव तर्कः । केन तत्रभवत्याऽकाशगामिनाऽपहृतेति । ) [106]

**राजा** – क इव देवताभ्योऽन्यः सम्भाव्यते । मेनका किल सख्यास्ते जन्मप्रतिष्ठेति श्रुतवान् अस्मि । तत्सखीभिस्ताम् [ हृताम् इति ] एव हृदयम् आशङ्कते । [107]

**अक्षमाला** – अम्मो, मोहो खु एसो रमणीओ, उण पडिबोहो ।  
( अहो मोहः खल्वेष रमणीयः, पुनः प्रतिबोधः । ) [108]

**विदूषकः** – जदि एवं ता अत्थि खु समागमो वि कालेन तत्थभवदीए ।  
( यद्येवं तदस्ति खलु समागमोऽपि कालेन तत्रभवत्या । ) [109]

**राजा** – कथमिव । [110]

**विदूषकः** – ण खु मादापिदरो भत्तुविरहिदं दुहिदरं चिरं पेक्खिदुं पारेदि ।  
( न खलु मातापितरौ भर्तृविरहितां दुहितरं चिरं प्रेक्षितुं पारयेते । ) [ 111]

**राजा** – वयस्य,

स्वप्नो नु माया नु मतिभ्रमो वा  
क्लिष्टं नु तावत् फलमेव पुण्यम् ।  
आसन्नवृत्तेस्तद् अतीतम् एष,  
मनोरथानाम् अतटप्रपातः ।। **6 – 9** ।। [112]

**विदूषकः** – भो, मा एवं भण । णं खु अङ्गुलीअअं येव णिदरसणं । एवं येव संभाविणो चिन्तणीया समागमा होन्ति । ( भोः मैवं भण । ननु खल्वङ्गुलीयकम् एव निदर्शनम् । एवमेव संभाविनोऽ-चिन्तनीयास्समागमा भवन्ति । ) [ 113]

**राजा** – ( अङ्गुलीयं विलोक्य ) अये, इदं तद् असुलभस्थानभ्रंशि शोचनीयम् । [ 114]

तव सुचरितम् अङ्गुलीय नूनं  
प्रतनु ममेव विभज्यते फलेन ।

अरुणनखमनोहरासु तस्याश्च्युतमसि
लब्धपदं यद् अङ्गुलीषु ।। **6 – 10** ।।[ 115 ]

**अक्षमाला** – ( आत्मगतम् ) सहि, दूरे वत्तसे । एआइणि दाव कण्णसुहं अनुभवामि ।
( सखि, दूरे वर्तस, एकाकिनी तावत् कर्णसुखमनुभवामि । ) [116]

**विदूषकः** – भो वअस्स, इदं अङ्गुलीअअं केण उग्घादेण तत्थभोदिए हत्थसंसग्गं पाविदं ।
( भो वयस्य, इदम् अङ्गुलीयकं केनोद्घातेन तत्रभवत्या हस्तसंसर्गम् प्रापितम् । ) [ 117]

**राजा** – श्रूयताम् । यदा तपोवनात् स्वनगरगमनाय प्रस्थितं मां प्रिया सबाष्पमिदम् आह, कियच्चिरेणार्यपुत्रोऽस्माकं संस्मरिष्यतीति ।[ 118]

**विदूषकः** – तदो तदो । ( ततः ततः । ) [ 119]

**राजा** – पश्चाद् इमां नाममुद्रां तदङ्गुलौ निवेशयता मया प्रत्यभिहितम् । [120 ]

एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय, गच्छसि यावदन्तम् ।
तावत् प्रिये, मदवरोधगृहप्रवेशी
नेता जनस्तव समीपमुपेष्यतीति ।। **6 – 11** ।। [121]

तच्च मोहात्तथा दारुणम् अनुष्ठितम् ।[ 122]

**अक्षमाला** – रमणीओ दे विहिणा दंसिदो मग्गो । ( रमणीयस्ते विधिना दर्शितो मार्गः । ) [ 123]

**विदूषकः** – अध कधं दासीए पुत्तस्स रोहिदमच्छस्स बलिसं विअ एदं अंगुलीअअं मुहे पविट्ठम् ।
( अथ कथं दास्याः पुत्रस्य रोहितमत्स्यस्य बडीशम् इवैतद् अंगुलीयकं मुखे प्रविष्टम् । ) [124]

**राजा** – शचीतीर्थसलिलं किल वन्दमानायास्ते सख्या गङ्गास्रोतसि परिभ्रष्टम् । भवतु, उपालप्स्ये तावदेतत् । [125 ]

कथं नु तं बन्धुरकोमलाङ्गुलिं
करं विहायासि निमग्नमम्भसि ।

अथ वा –

अचेतनं नाम गुणान् न लक्षयेन्
मयैव कस्माद् अवधीरिता प्रिया ।। **6 – 12** ।।[ 126 ]

**अक्षमाला** – पुव्वावरविरोधी एसो वुत्तन्तो वट्टदि । ( पूर्वापरविरोध्येष वृत्तान्तो वर्तते । ) [ 127 ]

**राजा** – अकारणपरित्यक्ता कदा नु प्रेक्षणीया भविष्यति । [128 ]

( ततः प्रविशति फलकहस्ता लिपिकरी ) [129]

**लिपिकरी** – ( समन्ताद् अवलोक्य ) एसो खु भट्टा जाव णं उपसप्पामि । ( उपसृत्य ) जअदु जअदु भट्टा । इअं चित्तगदा भट्टिणी । ( एषः खलु भर्ता, यावद् एनम् उपसर्पामि । जयतु जयतु भर्ता । इयं चित्रगता भर्त्री । ) [ 130 ]

( चित्रफलकं दर्शयति[19] ) [ 131]

**विदूषकः** – ( विलोक्य ) हे हे भो, सभावमहुरा आकीदि खु । साहु वअस्स साहु । किं बहुणा । सन्तानुप्पवेस संकाए आलवणकुदूहलं मं जणअदि । ( हे हे भोः, स-भावमधुरा आकृतिः खलु । साधु वयस्य साधु । किं बहुना । स्वान्तानुप्रवेशशङ्कयालपनकुतूहलं मां जनयति । ) [ 132 ]

**अक्षमाला** – अहो वअस्सस्स वत्तिकारेहाए णिउणदा । जाणे सही अग्गदो मे तिट्ठदि । ( अहो वयस्यस्य

[19] मै.-पाठ इतः परं राजा भणति यदहो रूपमस्यालेख्यस्य । तथा हि- "दीर्घापाङ्गविसारि नेत्रयुगलम्0" इत्यादि । स च श्लोकः प्रक्षिप्तः । विप्रलब्धावस्थायां स्वकीयस्य चित्रालेखनस्य प्रशंसानर्हत्वात् । ( प्रक्षिप्त-श्लोक-संख्या-27 ), ततश्च "अस्यास्तुङ्गमिव स्तनद्वयं0" इत्यपि श्लोकः प्रक्षिप्तः । ( प्रक्षिप्त-श्लोक-संख्या-28 )

वर्तिकारेखाया निपुणता । जाने सख्यग्रतो मे तिष्ठति[20] । ) [ 133 ]

**राजा –** ( निःश्वस्य )

साक्षात् प्रियाम् उपगताम् अपहाय पूर्वं
चित्रार्पितामहमिमां बहु मन्यमानः ।
स्रोतोवहां बहुनिकामजलाम् अतीत्य
जातोऽस्मि रे प्रणयवान् मृगतृष्णिकायाम् ।। **6 – 13** ।। [134]

**अक्षमाला –** अअं य्येव सव्वं पडिवण्णो जम्हि वत्तुकामा । ( अयमेव सर्वं प्रतिपन्नो यद् अस्मि वक्तुकामा । ) [135]

**विदूषकः –** ( निर्वर्ण्य ) भो तिण्हो अत्थभोदीए(ओ) दीसन्ति । सव्वाओ दंसणीआ । कदमा इत्थ दीसदे सउन्तला । ( भोः तिस्रोऽत्रभवत्यो दृश्यन्ते । सर्वा दर्शनीयाः । कतमा इह दृश्यते शकुन्तला । ) [136]

**अक्षमाला –** मोहदक्खो तवस्सी । अवस्सं ण से पच्चक्खा सही । ( मोहदक्षस्तपस्वी । अवश्यं नास्य प्रत्यक्षा सखी । ) [137]

**राजा –** त्वं तावत् कतमां तर्कयसि । [138]

**विदूषकः –** ( चिरं विलोक्य ) तक्केमि जा एसा अवसेअसिणिद्ध पल्लवं असोअलदिअं संसिदा सिहिलकेस-बन्धोव्वमन्तकुसुमेण बद्धसेअबिन्दुणा वदणकेण विसेस-णमिद-सा[हा]हिं बाहुलदाहिं ऊससिद-णीविणा वसणेण ईसि परिसन्ता विअ आलिहिदा एसा अत्थभोदी सउन्तला । इदराओ सहीओ । ( तर्कयामि यैषावसेकस्निग्धपल्लवाम् अशोकलतिकाम् संश्रिताशिथिलकेश-बन्धोद्वमत् कुसुमेन बद्धस्वेदबिन्दुना वदनकेन विशेष-नमित-शाखाभ्यां बाहुलताभ्यामुच्छ्वसित-नीविना वसनेनेषत्-परिश्रान्तेवालिखितैषात्रभवती शकुन्तला । इतरे सख्यौ । ) [139]

**राजा –** निपुणो भवान् । अस्त्यत्र मे भावचिह्नम् । [140]

स्विन्नाङ्गुलीनिवेशो रेखाप्रान्तेषु दृश्यते मलिनः ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्तिकोच्छ्वासात् ।। **6 – 14** ।।[ 141 ]

मेधाविनि, अवलिखितम् एतद् विनोदनम् अस्माभिस्तद् गच्छ, वर्तिकास्तावद् आनय । [142]

**लिपिकरी –** अय्य माधव, अवलम्भ चित्तफलअं जाव गच्छामि । ( इति विदूषकाय दत्त्वा निष्क्रान्ता ) ( आर्य माधव्य, अवलम्बस्व चित्रफलकं, यावद् गच्छामि । ) [143]

**विदूषकः –** किं अवरं इत्थ अभिलिहिदव्वं । ( किमपरम् इहाभिलिखितव्यम् । ) [144]

**अक्षमाला –** असंसअं, जो जो सहीए मे अभिरुइदो पदेसो तं आलिहिदुकामो भविस्सदि त्ति तक्केमि । ( असंशयम् । यो यस्सख्या मेऽभिरुचितः प्रदेशस्तं तम् आलिखितुकामो भविष्यतीति तर्कयामि । ) [145]

**राजा –** माधव्य, श्रूयताम् –

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी
पादान्ते निभृतं निषण्णचमरो गौरीगुरोः पावने ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां[21] मृगीम् ।। **6 – 15** ।। [146]

**विदूषकः –** ( आत्मगतम् ) तधा तक्केमि पूरिदमणेण चित्तफलअं कुच्चालआणं तवसाणं त्ति । ( तथा तर्कयामि

---

[20] मै.-पाठ इतः परं "यद्यत् साधु न चित्रेऽस्मिन् क्रियते तत्तदन्यथा0" इति क्षेपकः ।( प्रक्षिप्त-श्लोक-संख्या-29 )

[21] तृतीयांके यदा शकुन्तलाया नेत्रं कर्णोत्पलरेणुना कलुषितं भवति, तदा दुःषन्तेन तस्य प्रमार्जनं वदनमारुतेन कृतमिति प्रसंगस्य / दृश्यविशेषस्य स्मारणं समर्थनञ्चानेन श्लोकेन भवति ।

पूरितमनेन चित्रफलकं कूर्चालकानां तापसानाम् इति । ) [147]

**राजा –** माधव्य, अन्यच्च शकुन्तलायाः प्रसाधनम् अभिप्रीतम् अत्र विस्मृतम् अस्माभिः । [148]

**विदूषकः –** किं विअ । ( किमिव । ) [149]

**अक्षमाला –** वणवासस्स तस्सा अ सोअमल्लस्स जं अणुसदिसं भविस्सदि त्ति । ( वनवासस्य तस्याश्च सौकुमार्यस्य यद् अनुसदृशं भविष्यतीति । ) [150]

**राजा –**

कृतं न कर्णार्पितबन्धनं सखे
शिरीषमागण्डविलम्बिकेसरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे ।। **6 – 16** ।। [151]

**विदूषकः –** किं णु अत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं ओवारिअ चकिदचकिदा विअ ट्ठिदा । ( किं नु अत्रभवती रक्तकुवलयशोभिनाग्रहस्तेन मुखमपवार्य चकितचकितेव स्थिता । ) ( दृष्ट्वा ) [157 ] हे हे भो, एसो दासीए पुत्तो कुसुमपाडच्चरो महुअरो अत्थभोदीए वअणकमलं अभिलसदि । ( हे हे भोः, एष दास्याः पुत्रः कुसुमपाटच्चरो मधुकरोऽत्रभवत्या वदनकमलम् अभिलषति । ) [152]

**राजा –** ननु निवार्यताम् एष धृष्टः । [153]

**विदूषकः –** भवं य्येव अविणीदाणुसासी वारणे पभवदि । ( भवान् एवाविनीतानुशासी वारणे प्रभवति । ) [154]

**राजा –** युज्यते । अयि भोः, कुसुमलताप्रियातिथे ! किं इतः परिपतनखेदम् अनुभवसि । [155]

एषा कुसुमनिषण्णा तृषितापि सती भवन्तम् अनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वया विना पिबति ।। **6 – 17** ।। [156]

**अक्षमाला –** अभिजादं खु वारिदो । ( अभिजातं खलु वारितः । ) [157]

**विदूषकः –** पडिसिद्धवामा एसा जादी । ( प्रतिषिद्धवामैषा जातिः । ) [158]

**राजा –** एवं भोः, न मे शासने तिष्ठसि । श्रूयताम् तर्हि सम्प्रति । [159]

अक्लिष्टबालतरुपल्लवलोभनीयं,
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद् भ्रमर प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम् ।। **6 – 18** ।। [160]

**विदूषकः –** एवं तिक्खदण्डस्स कधं ते ण भाईस्सदि । ( प्रहस्य ) एस(सो) उम्मत्तको खु । अहं पि ईदिसस्स संसग्गेण ईदिसवण्णो विअ संवुत्तो । ( एवं तीक्ष्णदण्डस्य कथं ते न भेष्यति । एष उन्मत्तकः खलु । अहमपीदृशस्य संसर्गेण ईदृशवर्ण इव संवृत्तः । ) [161]

**अक्षमाला –** ममा वि अत्तणो अनन्तरं गुणेहि जा अहं दाणिं पडिबुद्धा । ( ममाप्यात्मनोऽनन्तरं गणय याहमिदानीं प्रतिबुद्धा । ) [162]

**राजा –** प्रिये, स्थितोऽहम् एतावति । [ 163]

**अक्षमाला –** अहो धीरे वि जणे रसो पदं करेदि । ( अहो धीरेऽपि जने रसः पदं करोति । ) [164]

**विदूषकः –** भो चित्तम् खु एदम् । ( भोः चित्रम् खलु एतत् । ) [165]

**राजा –** ( सविषादम् ) वयस्य, किमिदम् अनुष्ठितम् पौरोभाग्यम् । [166 ]

दर्शनसुखम् अनुभवत-
स्साक्षाद् इव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे
पुनरपि चित्रीकृता कान्ता ।। **6 – 19** ।। ( रोदिति ) [167]

**अक्षमाला** – वअस्स, सुमरिदं तए पच्चादेसविमाणणं सउन्तलाए सहीए, दिट्ठं खु पच्चक्खं अम्हेहिं । ( वयस्य, स्मृतं त्वया प्रत्यादेशविमाननं शकुन्तलायाः सख्याः, दृष्टं खलु प्रत्यक्षम् अस्माभिः । ) [168]

**लिपिकरी** – ( प्रविश्य लिपिकरी ) भट्टा, देवीए कुलप्पभाए परिजणेण अन्तरा अवच्छिण्णो दे वत्तिका-करण्डओ । ( भर्तः, देव्याः कुलप्रभायाः परिजनेन[22] अन्तरावच्छिन्नस्ते वर्तिकाकरण्डकः ।) [169]

**राजा** – भवतु, वयमप्यक्षमास्सम्प्रति वर्तिकाकर्मणि । [170]

**अक्षमाला** – बहुमाणा असे कुलप्पभा । अह वा, ण एदम् किं चि । विपञ्चीए खु असण्णिधाने एकतन्तुरपि अग्घदि । ( बहुमान्याऽस्याः कुलप्रभा[23] । अथ वा, नैतत् किञ्चित् । विपञ्च्याः खल्वसंनिधान एकतन्तु[24]रप्यर्घति । ) [171]

**राजा** – वयस्य, पश्य, कथम् अविश्रामदुःखम् अनुभवामः । [172]

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।
बाष्पोऽपि न ददात्येनाम् द्रष्टुं चित्रगतामपि ।। **6 – 20** ।। [173 ]

**लिपिकरी** – भट्टा, इदं पि दाणिं चित्तपडिकिदं पिङ्गलिआमिस्सीओ अवहट्टिदं यदन्ति (जं अत्थि) । ( भर्तः, इदमप्यिदानीं चित्रप्रतिकृतं पिङ्गलिकामिश्राभिः अवघट्टितं यदस्ति । ) [174]

**विदूषकः** – छिण्णा दाणिं से आसा । ( छिन्ना इदानीम् अस्य आशा । ) [175 ]

**राजा** – हुं । ( स्तनान्तरे हस्तं निक्षिपति ) [ 176 ]

**।। नेपथ्ये ।।** [177 ]

जअदु जअदु भट्टिणी । ( जयतु जयतु भर्त्री । ) [178 ]

**विदूषकः** – ( कर्णं दत्त्वा ) अवेध भो, मेधाविणिं मिगीं विअ अनुसरन्ती उवत्थिदा अन्तेउरव्वग्गी पिङ्गलिआ । ( अपेत भोः, मेधाविनीं मृगीम् इवानुसरन्त्युपस्थितान्तःपुर-व्याघ्री पिङ्गलिका[25] । ) [ 179 ]

**राजा** – वयस्य, इमाम् रक्षेमाम् प्रियाप्रतिकृतिम् । [ 180 ]

**विदूषकः** – अत्ताणअं त्ति भणाहि । ( आत्मानमिति भण । ) [181]

**अक्षमाला** – सहि एसा पदिकिदी वि दे पडिवक्खस्स अलङ्घणीआ करीअदि । ( सखि, एषा प्रतिकृतिरपि ते प्रतिपक्षस्यालङ्घनीया क्रियते । ) [182]

**विदूषकः** – ( फलकमादाय ) एसो णं तहिं गोएमि जत्थ पारावदिं वज्जिअ अवरो ण पेक्खदि । ( द्रुतपदं निष्क्रान्तः ) ( एष एनं तत्र गोपयामि यत्र पारावतीं वर्जयित्वाऽपरो न प्रेक्षते[26] । ) [183]

( प्रविश्य पत्रहस्ता प्रतीहारी ) [184]

---

[22] मै.-पाठेषु राज्ञः पूर्वपरिणीता राज्ञी वसुमत्येव वर्तिकाकरण्डकमाच्छिनत्ति । केवलं काश्मीर-पाठे नास्ति तादृशमालेखनम्, तदवधेयम् । मैथिल-पाठादेव समारब्धः पूर्वपरिणीतायाः संघर्षः । ततश्चान्यैः पाठैस्तस्या-ऽनुसरणं कृतम् ।

[23] मै.-पाठ एव राज्ञो मुखादुच्यते "वयस्य, उपस्थिता देवी बहुमानगर्वितेति । का.-पाठे नास्ति तादृशं वचः ।

[24] केवलं का.-पाठे समुपलभ्यमानेयमुपमा ध्यानार्हा । दुःषन्तस्य कृते शकुन्तला तु विपञ्ची वीणेवाभिमता, तस्याश्चाभाव एवेयमं कुलप्रभा केवलमेकतन्तुवाद्यस्वरूपा वर्तते । अनया चोपमया शकुन्तलाविषयकप्रणय-स्यापूर्वत्वं संसूच्यते, प्रमाणीक्रियते च तदक्षमालयेत्यपि ध्यानार्हम् ।।

[25] का.-पाठे राज्ञ्यः दासी पिङ्गलिकैवान्तःपुरव्याघ्रीरूपेणोल्लिखिता । तदनन्तरं मै.-पाठेषु विदूषकमुखात् सा वसुमत्येवान्तःपुरव्याघ्रीरूपेणोल्लिख्यते ।

[26] मै.-पाठे विदूषकस्य मुखे "यदि भवान् अन्तःपुरकूटपाशान्मोक्ष्यसे, तदा मां मेघप्रतिछन्नप्रासादे शब्दापये" त्यधिकं निरूप्यते । का.-पाठे नास्ति कुत्राप्यन्तःपुरकूटपाशः, अन्तःपुरवागुरा, अन्तःपुरकलहेत्यादि । अतो मैथिल-पाठादेव विविधैः प्रक्षेपैः समारभ्यते पूर्वपरिणीतानां पत्नीनां संघर्ष इति सुतरां सिध्यति ।

जअदु जअदु देवो । ( जयतु जयतु देवः ) [185]

**राजा –** वसुमति, न खलु देव्यागता । [186]

**प्रतीहारी –** भट्टा, पत्तकहस्तं मं पेक्खिअ पडिणिवुत्ता । ( भर्तः, पत्रकहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता । ) [187]

**राजा –** कालज्ञा कार्योपरोधं मे परिहरति । [188 ]

**प्रतीहारी –** देव, अमच्चो विण्णवेदि । अत्थजादस्स गणणाबहुलदाए एक्कं येव पूरकय्यं अवेक्खिदं । तं देवो सोढुं अरिहदि । ( देव, अमात्यो विज्ञापयति । अर्थजातस्य गणनाबहुलतयैकमेव पौरकार्यम् अपेक्षितम् । तद् देवस्सोढुम् अर्हति । ) [189 ]

**राजा –** मेधाविनि, वाच्यताम् । [190]

**लिपिकरी –** जं भट्टा आणवेदि । ( यद् भर्ता आज्ञापयति । ) ( पत्रकं प्रसार्य वाचयति ) "विदितम् अस्तु देवपादानां, यथा धनवृद्ध इति यथार्थनामा वणिग् वारिपथोपजिवी नौ-व्यसने विपन्नः । स चानपत्यः । तस्य कोटिशतसंख्यातं वसु । तदिदानीं राजार्थमापद्यते । श्रुत्वा राजा प्रमाणमिति ।" [191 ]

**राजा –** ( आकम्पितः ) कष्टा खल्वनपत्यता । वसुमति, महाधनत्वाद् बहुपत्नीकेन तत्रभवता भवितव्यम् । विचार्यतां यदि कदाचिद् आपन्नसत्त्वा कापि तस्य भार्या स्यात् । [192 ]

**प्रतीहारी –** देव, इदाणीमेव केसवसेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा जाआ सुणीअदि । ( देव, इदानीमेव केशवश्रेष्ठिनो दुहिता निर्वृत्तपुंसवना जाया श्रूयते । ) [193]

**राजा –** ननु स गर्भः पित्र्यं रिक्थम् अर्हति । गच्छ एवम् आर्यपिशुनं ब्रूहि । [194]

**प्रतीहारी –** जं देवो आणवेदि । ( यद् देव आज्ञापयति । ) ( प्रस्थिता ) [195]

**राजा –** एह्येहि तावत् । [196]

**प्रतीहारी –** ( निवृत्य ) इअम्हि । ( इयमस्मि । ) [197]

**राजा –** अपि च, तत्रभवान् वक्तव्यः । किम् अनेन सन्ततिरस्ति नास्ति वेति । [198]

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापाद् ऋते तासां दुःषन्त इति घोष्यताम् ।। **6 – 21** ।। [199]

**प्रतीहारी –** इदं णाम इत्थ घोसिदव्वम् । ( निष्क्रम्य पुनः प्रविश्य च ) देव, काले घुट्ठमिव अहिणन्दिदं देवसासणं महाअणेण । ( इदम् नामात्र घोषितव्यम् । देव, काले घुष्टम् इव अभिनन्दितं देवशासनं महाजनेन । ) [200]

**राजा –** एवं, ( दीर्घं निःश्वस्य ) एवं सन्ततिच्छेदनिरवलम्बानां मूलपुरुषाणाम् अवसाने सम्पदः परम् उपतिष्ठन्ते । ममाप्यन्ते पुरुवंशश्रिय एष एव वृत्तान्तः । [201]

**प्रतीहारी –** पडिहदं आसङ्किदम् । ( प्रतिहतम् आशङ्कितम् । ) [ 202]

**राजा –** धिङ् माम् उपस्थितश्रेयोऽवमानिनम् । [203]

**अक्षमाला –** असंसअं सहिं य्येव हिदए करिअ णिन्दिदो णेण अत्ता । ( असंशयं सखीम् एव हृदये कृत्वा निन्दितोऽनेनात्मा । ) [ 204]

**राजा -**
संरोपितेऽप्यात्मनि धर्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा ।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा ।। **6 – 22** ।।[ 205]

**लिपिकरी –** ( जनान्तिकम् ) इमं पत्तकं पेसअन्तेण किं स्मारिदं अमच्चेण जं पेक्खिअ दाव भट्टिणो जलावसेको संवुत्तो । ( विचिन्त्य ) अध वा, ण सो अबुद्धिपुरवं पवट्टदि । ( इमं पत्रकं

प्रेषयता किं स्मारितम् अमात्येन, यत् प्रेक्ष्य तावत् भर्तुर्जलावसेकः संवृत्तः । अथवा, न सो-ऽबुद्धिपूर्वकं प्रवर्तते । ) [206]

**राजा –** अहो दुःषन्तस्य संशयम् आरूढाः पिण्डभाजः । [207]

अस्मात् परं बत यथाश्रुतसंभृतानि
को नः कुले निवपनानि करिष्यतीति ।
नूनं प्रसूतिविकलेन मया प्रमुक्तं
धौताश्रुशेषम् उदकं पितरः पिबन्ति ।। **6 – 23** ।।[ 208]

**अक्षमाला –** सदिसं खु दे, ववधान-दोसेण अन्धआरो होदि । ( सदृशं खलु ते, व्यवधानदोषेणान्धकारो भवति । ) [ 209 ]

**प्रतीहारी –**देव, अलं सन्तापितेन । वअत्थो पहु अवरासु देवीसु अणुरूवपुत्तजम्मणा पुव्वपुरिसाणां अरिणो भविस्सदि त्ति[27] । ( देव, अलं सन्तापितेन । वयःस्थः प्रभुरपरासु देवीष्वनुरूपपुत्रजन्मना पूर्वपुरुषाणाम् अनृणो भविष्यतीति । ) [210]

**राजा** –( शोकावेगनाटितकेन ) सर्वथा, [ 211]

आमूलशुद्धसंतति कुलमेतत् पौरवं प्रजावन्ध्ये ।
मय्यस्तमितमनार्ये देश इव सरस्वतीस्रोतः ।। **6 – 24** ।।[ 212 ]

( संमोहं गतः ) [ 213 ]

**परिजनः –** ( ससंभ्रमम् अवलोक्य ) समस्ससदु समस्ससदु भट्टा । ( समाश्वासितु समाश्वासितु भर्ता । ) [ 214]

**अक्षमाला –** इदाणिं य्येव णं णिव्वुदं करेए । अधवा महदीहिं उण देवदाहिं एदं दंसिदम् । ण सक्कं मए अणणुण्णादाए हत्थसंसग्गं णेदुं । भोदु, जण्णभाओस्सुआओ देवाओ य्येव तहा करइस्सन्ति जधा एसो राएसि ताए सहधम्मचारिणीए समागमिस्सदि । [ 215]

( नभोऽवलोक्य[28] ) [ 216]

( सहर्षम् ) करयिस्सन्ति कधं य्येव, तहि पेक्खामि । जाव इमिणा वुत्तान्तेण पिअसहिं समस्सासेमि । [217]

( उद्भ्रान्तकेन निष्क्रान्ता ) [ 218]

( इदानीमेवैनं निर्वृतं कुर्वे । अथवा महतीभिः पुनर्देवताभिरेतद् दर्शितम् । न शक्यं मयाननुज्ञातया हस्तसंसर्गं नेतुम् । भवतु, यज्ञभागोत्सुका देवा एव तथा करिष्यन्ति यथैष राजर्षि-स्तया सहधर्मचारिण्या समागमिष्यति ।। करिष्यन्ति कथमेव, तत्र प्रेक्षे । यावद् अनेन वृत्तान्तेन प्रियसखीं समाश्वासयामि । ) [ 219]

( **नेपथ्ये** ) [ 220 ]

अब्बम्हण्णं अब्बम्हण्णं भो । अब्बम्हण्णं ।

( अब्रह्मण्यम् अब्रह्मण्यम् भोः । अब्रह्मण्यम् ) [ 221]

**राजा –** ( शनैः प्रत्याश्वस्य । ) ( कर्णं दत्त्वा ) अये माधव्यस्येवार्तनादः ।[ 222]

**लिपिकरी –** तवस्सी, पिङ्गलिआमिसीणं मुहे पडिदो भविस्सदि । ( तपस्वी पिङ्गलिकामिश्राणां मुखे

---

[27] इतः परं स्वगतोक्तिरूपेण "न मे वचनं प्रतिगृह्णाति । अथवानुरूपमेवौषधमातङ्कं निवारयती"ति वाक्यं वर्तते, तच्च प्रक्षिप्तत्वाद् दूरीकर्तव्यम् ।

[28] केवलं का.-पाठ एव समुपलभ्यत एतादृशी रंगसूचना । नासूचितस्य पात्रस्य प्रवेशो निर्गमोऽपि वेति वचनानुसारं मातलेरागमनं संसूच्यतेऽत्र । न प्राप्यत एतादृशी दृश्य-योजनाऽन्यत्र कुत्रापि । तेन का.-पाठ एव ज्यायान् श्रद्धेयश्च ।।

पतितो भविष्यति । ) [223]

**राजा** – वसुमति, गच्छ मद्वचनाद् अनिषिद्धपरिजनां देवीम् उपालभस्व[29] । [224]

**प्रतीहारी** – तथा । ( इति निष्क्रान्ता ) [ 225]

**( नेपथ्ये )** [ 226]

अब्बम्हण्णं अब्बम्हण्णं भो । ( अब्रह्मण्यम् अब्रह्मण्यम् भोः । ) [227]

**राजा** – परमार्थभीत एव भिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः । [228]

**कञ्चुकी** – ( प्रविश्य ) आज्ञापयतु देवः । [229]

**राजा** – किम् एष माधव्यो माणवकः क्रन्दति । [230]

**कञ्चुकी** – देव, यावद् अवलोकयामि । ( निष्क्रम्य संभ्रमात् पुनः प्रविष्टः ) [ 231]

**राजा** – पार्वतायन, न खलु किञ्चिद् अत्ययिकम् / अत्याहितम् । [ 232]

**कञ्चुकी** – नैवम् । परित्रायतां सुहृदं महाराजः[30] । [233]

**( नेपथ्ये )** [ 234 ]

अयि, धाव भो । ( अयि, धाव भोः । ) [ 235 ]

**राजा** – ( सहसोत्थाय ) ( गतिभङ्गेन परिक्रामन् ) वयस्य, न भेतव्यम् । न भेतव्यम् । [236]

**( नेपथ्ये )** [ 237]

**विदूषकः** – कधम् दाणिं ण भाइस्सं । एसो मं को वि पच्छामोडिदसिरोधरं इक्खुं विअ थीरभङ्गं य्येव करेदुं इच्छदि । ( कथमिदानीं न भेष्यामि । एष मां कोऽपि पश्चान्मोटितशिरोधरम् इक्षुम् इव स्थिरभङ्गम् एव कर्तुम् इच्छति । ) [238]

**राजा** – ( सदृष्टिक्षेपम् ) धनुर्धनुस्तावत् । [239]

**यवनी** – ( प्रविश्य शाङ्गर्हस्ता यवनी ) जअदु जअदु भट्टा । एदं सरासणं हत्थावापसहिदम् । ( जयतु, जयतु भर्ता । एतच्छरासनं हस्ताचापसहितम् । ) [240]

**राजा** – ( सशरं धनुरादत्ते । ) [ 241 ]

**( नेपथ्ये )** [ 242 ]

एष त्वाम् अभिनवकण्ठशोणितार्थी,
शार्दूलः पशुमिव हन्मि वेष्टमानम् ।
आर्तानाम् भयमपनेतुम् आत्तधन्वा
दुःषन्तस्तव शरणं भवत्विदानीम् ।। **6 – 25** ।। [ 243]

**राजा** – ( सरोषम् ) कथं माम् एवम् उद्दिशति । तिष्ठ तिष्ठ कुलपांसन, अयम् इदानीं न भवसि । ( चापमादाय ) पार्वतायन, सोपानमार्गम् आदेशय । [ 244]

**कञ्चुकी** – इत इतो देवः । ( सर्वे सत्वरम् उपसर्पन्ति ) [ 245]

---

[29] का.-मै.-बं.-पाठेषूक्तिद्वयमिदं ( 223 एवं 224 ) प्राप्यते । तदवधेयम् ।, ( दाक्षि.-देव.-पाठयोस्तन्नास्ति । )

[30] का.-मै.-बं.-पाठेष्वितः परं कञ्चुकिनो मुखे श्लोकद्वयं प्राप्यतेः- "प्रागेव जरसा कम्पस्सविशेषं तु साम्प्रतं0" इति । ( प्रक्षिप्त-श्लोक-संख्या-30 ), ततश्च "तस्याग्रभूमेर्गृहनीलकण्ठैरनेक0" इति । ( प्रक्षिप्त-श्लोक-संख्या-31 ) । (दाक्षि.-देव.-पाठयोरस्यैव श्लोकस्यार्थो गद्येन वाक्येन निरूप्यते ) ।, एवञ्च राज्ञो मुखे "अहन्यहन्यात्मन एव तावज्ज्ञातुं प्रमादस्खलितं0" इति । ( प्रक्षिप्त-श्लोक-संख्या-32 ), अप्रासङ्गिकत्वात्सर्वे चैते निष्कासिताः । विदूषकस्यार्तस्वरस्य सम्भावितं कारणं यन्मेधाविन्योक्तं, राज्ञा च यथाऽनिषिद्धपरिजनायै देव्यै संदिष्टं, स एव मूलपाठः स्यात् । मूलपाठस्य संरक्षणेन सहैव केनापि कविंमन्यमानेन रंगकर्मिणा स्वकवित्वं प्रदर्शयितुं विदूषकग्रहणस्य कारणान्तरं परिकल्प्य प्रक्षिप्ताश्चैते त्रयः श्लोकाः । राज्ञो गृहाः केनापि प्रकाशेतरमूर्तिना सत्त्वेनाऽभिभूयन्त इत्यादिकं सर्वमनुपकारकम्, अप्रासंगिकञ्च । अतस्त्याज्यञ्च ।।

**राजा –** ( समन्तात् विलोक्य ) शून्यं खल्विदम् । [ 246]

**( नेपथ्ये )** [ 247 ]

**विदूषकः –** अभिधाव भो, अहं भवं पेक्खामि । एसो भवं मं न पेक्खदि । मज्जारगिहीदो विअ उन्दुरो णिरासो म्हि जीविदे संवुत्तो । ( अभिधाव भोः, अहं भवन्तं प्रेक्षे । एष भवान् माम् न प्रेक्षते । मार्जारगृहीत इवोन्दुरो निराशोऽस्मि जीविते संवृत्तः । ) [ 248 ]

**राजा –** भोः तिरस्करिणीगर्वित, मदीयम् अस्त्रं त्वां पश्यति । स्थितो भव । मा च वयस्यसम्पर्काद् विश्वासोऽभूत् । एष त्वदर्थं तमिषुम् संदधे । [ 249]

यो हनिष्यति वध्यं,
त्वां रक्ष्यं रक्षिष्यति द्विजम् ।
हंसोऽपि क्षीरमादत्ते त-
न्मिश्रा वर्जयत्यपः ।। **6 – 26** ।। [250]

( अस्त्रं सन्धत्ते ) [ 251 ]

( प्रविश्य सम्भ्रान्तो विदूषकमुत्सृज्य मातलिर्विदूषकश्च ) [ 252 ]

**मातलिः –** आयुष्मान्,

कृताः शरव्या हरिणा तवासुराः
शरासनं तेषु विकृष्यताम् इदम् ।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः ।। **6 – 27** ।। [253]

**राजा –** ( अस्त्रमुपसंहरन् ) अये मातलिः । स्वागतम् देवराजसारथये । [254]

**विदूषकः –** ( निकटमेत्य ) भो अहं णेण पसुमारेण मारिदो इमम्हि । साअदेण अभिनन्दासि । ( भोः अहम् अनेन पशुमारेण मारितः अस्मि । स्वागतेन अभिनन्दसि । ) [ 255]

**मातलिः –** ( सस्मितम् ) आयुष्मन्, श्रूयतां यदस्मि हरिणा भवत्सकाशं प्रेषितः । [ 256 ]

**राजा –** अवहितोऽस्मि । [257]

**मातलिः –** अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः ।[ 258 ]

**राजा –** श्रुतपूर्वो मया नारदात् । [259]

**मातलिः –**

सख्युस्ते स किल शतक्रतोरवध्यः
तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्तिः
तन् नैशं तिमिरमपाकरोति चन्द्रः ।। **6 – 28** ।। [260]

तद् भवान् गृहीतचाप एवेदानीम् ऐन्द्रं रथम् अधिरुह्य विजयाय प्रतिष्ठताम् ।[ 261 ]

**राजा –** अनुगृहीतम् अनया मघवतस्सम्भावनया । अथ भवद्भिर्माधव्यं प्रति किमेवं प्रयुक्तम् ।[ 262]

**मातलिः –** ( सस्मितम् विदूषकम् अवलोक्य ) तदपि कथ्यते । कुतोऽपि निमित्तान् मनस्तापाद् आयुष्मान् मया विक्लवो दृष्टः । पश्चात् कोपयितुम् आयुष्मन्तं तथा कृतवान् अस्मि । [ 263 ]
कुतः –

ज्वलति चलितेन्धनो-
ऽग्निर्विकृतः पन्नगः फणां कुरुते ।
प्रायस्स्वं महिमानं
क्षोभात् प्रतिपद्यते जन्तुः ।। **6 – 29** ।। [264 ]

**राजा –** ( जनान्तिकम् ) वयस्य माधव्य, अनतिक्रमणीया दिवस्पतेराज्ञा । तदत्र परिगतार्थं कृत्वा मद्

वचनाद् अमात्यपिशुनं ब्रूयाः – [ 265]

त्वन्मतिः केवला तावत् परिपालयितुं प्रजाः ।
अधिज्यमिदम् अन्यस्मिन् कर्मणि व्यापृतं धनुः ॥ **6 – 30** ॥ [266 ]

**विदूषकः –** जं भवं आणवेदि । ( यद् भवान् आज्ञापयति । ) ( इति निष्क्रान्तः । ) [267]

**मातलिः –** इत इत आयुष्मान् । [268]

**( इति परिक्रम्य निष्क्रान्ताः सर्वे )** [269]

**॥ इति षष्ठोऽङ्कः ॥**

**।। अथ सप्तमोऽङ्कः ।।**

( ततः प्रविशति नाकलासिका[1] ) [ 1 ]

**नाकलासिका** –आणत्तं हि गुरुणा णारएण जधा – एदेसु य्येव दिवसेसु मच्चलोआदो उत्तिण्णेण राएसिणा दुस्सन्तेण भअवदो पुरन्दरस्स पिअआरिणा दाणव-वह-णिमिद्दं गन्तव्वं । जाव अभि[च्चि]अ इमं आपुच्छिअमाणो णिक्खिवदि ताव य्येव मए विबुहपच्चक्खं मङ्गलणिमित्तं किं पि पेक्खणअं दरसइदव्वं । ता तुमं कं पि लासिअं अण्णेसिअ सङ्गीदसालाअं आगच्छत्ति । ता जाव लासिअं अण्णेमि । ( परिक्रम्यावलोक्य च ) का पुण एसा गिहीदवरणा पच्छा हरिसिदुक्कण्ठिदा विअ इदो एवागच्छदि । ( निपुणमवलोक्य ) कधं पिअसही चूदमञ्जरी । ता जाव एदाए सह उवज्झाअ-समीपं गच्छामि । ( इति प्रतिपालयति ) ( आज्ञप्तं हि गुरुणा नारदेन यथैतेष्वेव दिवसेषु मर्त्यलोकाद् उत्तीर्णेन राजर्षिणा दुःषन्तेन भगवतः पुरन्दरस्य प्रियकारिणा दानववधनिमित्तं गन्तव्यं, यावद् अभ्यर्च्येममापृच्छ्यमानं निक्षिपति तावदेव मया विबुधप्रत्यक्षं मङ्गलनिमित्तं किमपि प्रेक्षणकं दर्शयितव्यम् । तत् त्वं कामपि लासिकाम् अन्वेष्य सङ्गीतशालायामागच्छेति । तद् यावल्लासिकाम् अन्वेषयामि । का पुनरेषा गृहीतवर्णा पश्चाद् हर्षितोत्कण्ठेवेत एवागच्छति । कथं प्रियसखी चूतमञ्जरी । तद् यावद् एतया सहोपाध्यायसमीपं गच्छामि । ) [ 2 ]

।। ततः प्रविशति यथानिर्दिष्टा लासिका सविस्मयं सहर्षं च ।। [ 3 ]

अहो, महप्पभावो राएसी दुस्सन्तो । ( सासूयम् ) अहो महाबलो सो हदो दुज्जओ दाणवबलो । ( विचार्य ) अहवा, दुस्सन्तो य्येव, जेण सारधि-दुदीएण य्येव अणेअ पहरण साहस्सइं विकिरन्तो खणेण य्येव णिहदो सो दुज्जअदाणवबलो ।। [ 4 ]

( नृत्यति ) [ 5 ]

( अहो महाप्रभावो राजर्षिर्दुःषन्तः । अहो महाबलस्स हतो दुर्जयो दानवबलः । अथवा दुःषन्तः एव, येन सारथिद्वितीयेनैवानेक-प्रहरण-साहसानि विकिरन्(रता) क्षणेनैव निहतः स दुर्जयदानव-बलः । ) [ 6 ]

**प्रथमा** – ( उपसृत्य ) सहि चूदमञ्जरिए उक्कण्ठिदा विअ लक्खीअसि । ( सखि चूतमञ्जरिके, उत्कण्ठितेव लक्ष्यसे । ) [7]

**द्वितीया** – ( विलोक्य ) कधं पारिजाअमञ्जरी । सहि, सव्वं कधयिस्सं । तुअं दाव कहिं पत्थिद त्ति पुच्छिस्सं । ( कथं पारिजातमञ्जरी[2] । सखि, सर्वं कथयिष्यामि । त्वं तावत् कुत्र प्रस्थितेति प्रक्ष्यामि । ) [ 8 ]

**प्रथमा** – सहि, सङ्खेवेण कधइस्सं । अहं खु राएसिणो दुस्सन्तस्स दाणवविजअ-ववदेसेण अज्ज मङ्गल-णिमित्तं किं पि पेक्खणअं दंसीअदि त्ति, उवज्झाअस्स आणाए उभे य्येव सआसं । ( सखि,

---

[1] केवलं का.-पाठे समुपलभ्यमानोऽयं प्रवेशको विदुषां मतेन प्रक्षिप्तः । डॉ. एस. के. बेलवल्करमहाशयेन तस्य मौलिकता स्वीकृता, यतो हि- यथैव कालिदासस्यान्ययोर्नाटकयोः संगीत-नृत्ययोः समावेशस्तथैवात्रापि भवितुमर्हतीति तेषां मतिः । मदीयेन मतेन तु यावत्पर्यन्तम् "अविषयगमनमि"ति प्राकृतगाथायाः पाठशुद्धिर्न जायते, न च ज्ञायते तस्याः स्वारस्यं / प्रयोजनं तावत्पर्यन्तमस्य प्रवेशकस्य प्रक्षिप्तत्वं न घोषितव्यम् ।

[2] नाटकेऽस्मिन् 1. अनसूया-प्रियंवदा, 2. परभृतिका-मधुकरिका, 3. मेधाविनी-पिङ्गलिका, 4. संयता-सुव्रतादीनां स्त्रीयुगलं नैकत्र प्रयुक्तम् । तद्-दृष्ट्वाऽस्मिन् प्रवेशकेऽपि वर्तमानं पारिजातमञ्जरी-चूतमञ्जर्योः स्त्रीयुगलमपि मौलिकं स्यादिति प्रतीयते । तेनाप्ययं प्रवेशकः कदाचिन्मूलपाठे भवेदित्यनुमातुं शक्यते । एवञ्च, पारिजातमञ्जरी-पदेन मेनकात्मजा शकुन्तला, चूतमञ्जरी-पदेन च पार्थिवो दुःषन्तः संसूच्यते । स्वर्ग-पृथिव्योर्मेलनं द्योतयितुं नासिकाद्वयस्यात्र नर्तनं प्रस्तूयतेतरामिति दिक् ।।

सङ्क्षेपेण कथयिष्यामि, अहं खलु राजर्षेर्दुःषन्तस्य दानवविजयव्यपदेशेनाद्य मङ्गलनिमित्तं किमपि प्रेक्षणकं दर्शयत इति उपाध्यायस्याज्ञया उभे एव सकाशम् --- -- -- । ) [ 9 ]

**द्वितीया** – ( सोत्कण्ठम् ) आसि अवसरो एदस्स दाणिं पुणो मच्चलोअं पत्थिदे एदस्सिं महाराए कस्स दंसीअदि । ( आसीदवसर एतस्य । इदानीं पुनर्मर्त्यलोकं प्रस्थित एतस्मिन् महाराजे कस्य दृश्यते । ) [ 10 ]

**प्रथमा** – ( साशङ्कम् ) सहि, किं महेन्दस्स मनोरहाइं सम्पादिअ गदो, आद अण्णदि त्ति ।
( सखि, किम् महेन्द्रस्य मनोरथान् सम्पाद्य गत, उतान्यथेति । ) [ 11 ]

**द्वितीया** – सहि, सुणु । अज्ज य्येव गोसग्गसमए णवरं दुज्जयदाणवजीविअसव्वस्ससेसं गिहितुण एव अ तिदसविलासिणि सरसहिअआइं अवणिं अहिपडिदो अदो अ मए हरिसोकण्ठाणं कारणं ।
( सखि, शृणु । अद्यैव गोसर्गसमये केवलं दुर्जयदानवजीवितसर्वस्वशेषं गृहीत्वा, एवञ्च, त्रिदश-
-विलासिनीसरसहृदयान्यवनिम् अभिप्रस्थितः । अतश्च मे हर्षोत्कण्ठानां कारणम् । ) [12 ]

**प्रथमा** – सहि तए पिअं णिवेदिदं जं य्येव उवज्झाएण पुरुवंसराएसिणो पुरओ कय्यं कादुं आणत्तं । तं य्येव गीअं कादुण इत्थ य्येव करेम्ह । ( सखि, त्वया प्रियं निवेदितं यद् एवोपाध्यायेन पुरुवंशराजर्षेः पुरतः कार्यं कर्तुम् आज्ञप्तम् । तदेव गीतं कृत्वाऽत्रैव कुर्वः । ) [ 13 ]

**द्वितीया** – जं दे रोअदि, य्येव ता ज य्येव गीअं मए लविदं, तए वा, सह णच्छम्म ।
( यत्ते रोचते, एवं तत् यदेव गीतं मया लपितं, त्वया वा, सह नृत्यावः । ) [ 14 ]

**प्रथमा** – सहि, एवं करेम्ह । ( उभे गायतः ) [ 15 ]

अविसअगमणं कंचन अण्णं अ सराअमालि महुसमओ ।
अण्णं कुणइं विसण्णं पाडीइमाणं भूमीए ।। 7 – 1 ।।

( सखि, एवं कुर्वः ।

अविषयगमनं कंचनान्यं च सरागम् आलिं मधुसमयः ।
अन्यं करोति विषण्णं पात्यमानं भूम्याः(भूम्याम्) ।। 7 – 1 ।। ) [ 16 ]

( इत्यन्ते नर्तित्वा निष्क्रान्ते । ) [ 17 ]

**( प्रवेशकः )** [ 18 ]

( ततः प्रविशति रथयानेन रथाधिरूढो राजा दुःषन्तो मातलिश्च ) [ 19]

**राजा** – मातले, अनुष्ठितनिदेशोऽपि मघवतस्सत्क्रियाविशेषाद् अनुपयुक्तमिवात्मानं समर्थये । [20 ]

**मातलिः** – आयुष्मान् उभयमप्यपरितोषम् । कुतः – [ 21 ]

उपकृत्य हरेस्तथा भवा-
ल्लँघु सत्कारम् अवेक्ष्य मन्यते ।
गणयत्यवदानम्मितां भवत—
स्सोऽपि न सत्क्रियाम् इमाम् ।। 7 – 2 ।। [ 22 ]

**राजा** – मा मैवम् । स खलु मनोरथानाम् अप्यतिभूमिवर्ती विसर्जनावसरे सत्कारः । मम हि दिवौकसां समक्षम् अर्धासनोपवेशितस्य । [ 23 ]

अन्तर्गतप्रार्थनम् अन्तरस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन ।
प्रमृज्य वक्षो हरिचन्दनाक्तं
मन्दारमाला हरिणा पिनद्धा ।। 7 – 3 ।। [ 24 ]

**मातलिः** – किमिव नायुष्मान् परमेश्वराद् अर्हति । पश्य – [ 25 ]

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवम् उद्धृतदानवकण्टकम् ।
तव शरैरधुना नतपर्वभिः
पुरुषकेसरिणश्च पुरा नखैः ।। 7 – 4 ।। [ 26 ]

**राजा –** अत्र शतक्रतोरेव महिमा । पश्य, [ 27 ]

सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
संभावनागुणम् अवेहि तमीश्वराणाम् ।
किं प्राभविष्यद् अरुणस्तमसां वधाय
तं चेत् सहस्रकिरणो धुरि नाकरिष्यत् ।। 7 – 5 ।। [ 28 ]

**मातलिः –** सदृशं तवैतत् । ( स्तोकम् अन्तरमतीत्य ) आयुष्मान्, इतः पश्य, नाकपृष्ठप्रतिष्ठितस्य सौभाग्यम् आत्मयशसः । [ 29 ]

विच्छित्तिशेषैस्सुरसुन्दरीणां
वर्णैरमी कल्पलतान्तरेषु ।
संचिन्त्य गीतिक्षमम् अर्थतत्त्वं
दिवौकसस्त्वच्चरितं लिखन्ति ।। 7 – 6 ।। [ 30 ]

**राजा –** मातले, असुरसंप्रहारोत्सुकेन पूर्वं दूरम् अधिरोहता न लक्षितो मया स्वर्गमार्गः । तत् कतमस्मिन् पथि मरुतां वर्तामहे । [ 31 ]

**मातलिः –**
त्रिस्रोतसं वहति यो गगनप्रतिष्ठां
ज्योतींषि वर्तयति चक्रविभक्तरश्मिः ।
तस्य व्यपेतरजसः प्रवहस्य वायो-
र्मार्गो द्वितीयहरिविक्रमपूत एषः ।। 7 – 7 ।। [ 32 ]

**राजा –** ततः खलु मे सबाह्यान्तःकरणोऽन्तरात्मा प्रसीदति । ( रथाङ्गे विलोक्य ) शङ्के मेघपथम् अवतीर्णौ स्वः । [ 33 ]

**मातलिः –** ( सस्मितम् ) कथम् अवगम्यते । [ 34 ]

**राजा –**
अयम् अरिविवरेभ्यश्चातकैर्निष्पतद्भिः
हरिभिरचिरभासां तेजसा चानुलिप्तैः ।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः ।। 7 – 8 ।। [ 35 ]

**मातलिः –** क्षणम् ऊर्ध्वम् आयुष्मान् नात्माधिकारभूमौ वर्तिष्यते । [ 36 ]

**राजा –** ( अधोऽवलोक्य ) मातले, वेगावरणाद् आश्चर्यदर्शनः खलु सम्पद्यते मनुष्यलोकः । [37] तथा,

शैलानाम् अवरोहतीव शिखरादुन्मज्जतां मेदिनी
पर्णेष्वन्तरलीनतां विजहति स्कन्धोदयात् पादपाः ।
सन्धानं तनुभावनष्टसलिला व्यक्ता व्रजन्त्यापगाः
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वम् आनीयते ।। 7 – 9 ।। [ 38 ]

**मातलिः –** ( सबहुमानम् आलोक्य ) अहो उदग्ररमणीया पृथिवी । [ 39 ]

**राजा –** मातले, कतमोऽयं पूर्वापरसमुद्रावगाढः कनकनिष्यन्दशोभी सान्ध्य इव मेघपरिघः सानुमान् आलोक्यते । [ 40 ]

**मातलिः** – आयुष्मान् एष हेमकूटो नाम किम्पुरुषपर्वतः, परं तपस्विनां सिद्धिक्षेत्रम् । पश्य, [ 41 ]

स्वायम्भुवो मरीचेर्यः प्रबभूव प्रजापतिः ।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति ।। 7 – 10 ।। [ 42 ]

**राजा** – ( सादरम् ) तेन हि अनतिक्रमणीयानि श्रेयांसि । प्रदक्षिणीकृत्य भगवन्तं [ गन्तुम् ] इच्छामि यावत् । [43]

**मातलिः** – प्रथमः कल्पः । ( अवतरणं नाटयित्वा ) एताववतीर्णौ स्वः । [ 44 ]

**राजा** – ( सविस्मयम् ) मातले,

उपोढशब्दा न रथाङ्गनेमयः
प्रवर्तमानं च न दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि रथो न लक्ष्यते ।। 7 – 11 ।। [ 45 ]

**मातलिः** – एतावान् एव शतमन्योरायुष्मतश्च विशेषः । [ 46 ]

**राजा** – कतमस्मिन् प्रदेशे मारीचाश्रमः ।[ 47 ]

**मातलिः** – ( हस्तेन दर्शयन् )

वल्मीकार्धनिमग्नमूर्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीडितः ।
अंसव्यापि शकुन्तनीडनिचितं[3] बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः ।। 7 12 ।।[ 48 ]

**राजा** – नमोऽस्मै कष्टतपसे । [ 49]

**मातलिः** – ( संयतप्रग्रहं कृत्वा ) एतावदिति परिवर्धितमन्दारवृक्षकं प्रजापतेस्तपोवनं प्रविष्टौ स्वः ।[ 50]

**राजा** – अहो विस्मयः । स्वर्गाद् अधिकनिवृत्तिस्थानम् । अधिक(अमृत)ह्रदमिवावगाढोऽस्मि ।[51]

**मातलिः** – ( रथं स्थापयित्वा ) अवतीर्यताम् । [52]

**राजा** – ( साभिनयम् अवतीर्य ) भवान् कथम् इदानीम् । [53]

**मातलिः** - समययन्त्रितोऽयम् आस्ते रथः । वयमप्यवतरामः । [54]
( तथा कृत्वा ) इत इत आयुष्मान् । [55]

( उभौ परिक्रम्य ) [56]

**मातलिः** – आयुष्मन्, दृश्यन्ताम् अत्रभवतां सिद्धर्षीणां तपोवनभूमयः । [57]

**राजा** – ननु विस्मयाद् उभयमप्यवलोकयामि । [58]

प्राणानाम् अनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये हैमसहस्रपत्रसुभगे नक्तंदिवं सद्व्रतम् ।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंनिधौ संयमो
यत्काङ्क्षन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ।। 7 – 13 ।।[ 59]

**मातलिः** – उत्कर्षिणी खलु महतां प्रार्थना । ( परिक्रामतः ) [60]

**मातलिः** – ( आकाशे ) वृद्धशाकल्य, किं व्यापारो भवान् । ( कर्णं दत्त्वा ) किं ब्रवीषि । एष दाक्षायण्या पतिव्रतापुण्यम् अधिकृत्य पृष्टः । तस्यास्तद् व्याकरोतीति प्रतिपाल्यावसरः खलु प्रस्तावः । ( राजानं दृष्ट्वा ) अस्मिन् नशोकपादपे तावद् आयुष्मान् आस्ताम् । यावत् त्वां प्रजापतय

---

[3] कोऽयं स्यान्मुनिः ? किमयं "शकुन्त-नीड-निचित0" इति पदेन शकुन्तलायाः पिता विश्वामित्रो वर्ण्यते ?!

आवेदयामि । [61]

**राजा –** यथा भवान् मन्यते । ( स्थितः ), [62]

( निष्क्रान्तो मातलिः । ) [ 63]

**राजा –** ( निमित्तं सूचयित्वा ) [ 64]

मनोरथाय नाशंसे बाहो स्फुरसि किं वृथा ।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ।। 7 – 14 ।।[ 65 ]

**( नेपथ्ये )**

मा खु मा खु चवलदं करेहि । सिङ्घ..... । कधं कधं य्येव अत्तणो पकिदिं दंसेसि । [66]
( मा खलु मा खलु चपलतां कुरु । सिंह .... । कथं कथमेवात्मनः प्रकृतिं दर्शयसि । )

**राजा –** ( कर्णं दत्त्वा ) अभूमिरियम् अविनयस्य । को नु खल्वविनयात् निषिध्यते । ( शब्दानुसारेणाऽवलोक्य ) ( विस्मयाभिनयपूर्वकम् ) अये, अनुरुध्यमानस्तापसीभ्याम् अबालसत्त्वो बालः ।[67]

अव(र्ध)पीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
विलम्बितं सिंहशिशुं करेणाहत्य कर्षति ।। 7 – 15 ।।[68]

( ततः प्रविशति यथानिर्दिष्टकर्मा तापसीभ्याम्[4] अनुरुध्यमानो बालः । ) [ 69]

**बालः –** जिम्भ जिम्भ, ले सिङ्घ । दन्ताइं दे गणइस्सं । ( जृम्भ जृम्भ, रे सिंह, दन्तानि ते गणयिष्यामि । ) [ 70 ]

**तापसी –** अविणीद, किं ति णो अवच्चणिव्विसेसाइं सत्ताइं विप्पकरोसि । पवट्टदि [दे] संरम्भो । थाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामधेओ सि । ( अविनीत, किमिति नोऽपत्य-निर्विशेषाणि सत्त्वानि विप्रकरोषि । प्रवर्तते [तव] संरम्भः । स्थाने खल्वृषिजनेन सर्वदमन इति कृतनामधेयोऽसि । ) [71]

**राजा –** किं नु खलु बालेऽस्मिन् नौरस इव पुत्रे स्निह्यति मे मनः । ( विचिन्त्य ) नूनमनपत्यता मां वत्सलयति ।[72]

**द्वितीया –** एसा केसरिणी तुमं लङ्घेदि, जदि से पुत्तकं ण मुञ्चेसि । ( एषा केसरिणी त्वाम् लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि । ) [73]

**बालः –** ( सस्मितम् ) अम्महे, बलिअं खु भीदे म्हि । ( इत्यधरं दशति ) ( अहो बलीयः खलु भीतोऽस्मि । ) [ 74 ]

**राजा –**
महतस्तेजसो बीजं बालोऽयं प्रतिभाति मे ।
स्फुलिङ्गावस्थया वह्निरेधोपेक्ष इव स्थितः ।। 7 – 16 ।।[75]

**प्रथमा –** वच्छक, मुञ्च एदं बालं मइन्दं । अण्णं दे कीलणकं दाइस्सं । ( वत्सक, मुञ्चैतम् बालं मृगेन्द्रम् । अन्यं ते क्रीडनकं दास्यामि । ) [76]

**बालः –** कहिं शे । देहि मे एणं । ( कुत्र सः । देहि म एनम् ) ( इति दक्षिणहस्तं प्रसारयति ) [77]

**राजा –** कथं चक्रवर्तिलक्षणम् अनेन धार्यते । तथा ह्यस्य, [78]

---

[4] प्रथमायास्तापस्या नाम संयतेति । द्वितीयायाश्च नाम सुव्रतेति ।

प्रलोभ्यवस्तुप्रणयप्रसारितो
विभाति जालग्रथिताङ्गुलिः करः ।
अलक्ष्यपत्रान्तरम् इद्धरागया
नवोषसा भिन्नमिवैकपङ्कजम् ।। 7 – 17 ।। [79]

**प्रथमा** – सुव्वदे, ण सक्को एसो आआसमित्तेण सअमिदुं । ता गच्छ । मम केरए उडए इसि [ मङ्कण-अस्स ] इसिकुमारअस्स वण्णअचित्तिदो मिट्टिआमऊरओ चिट्ठदि । तं से उवाहर । ( सुव्रते, न शक्य एष आश्वासमात्रेण संयमितुम् । तद् गच्छ । मामक उडजे ऋषि [मङ्कनकस्य] कुमारकस्य वर्णकचित्रितो मृत्तिकामयूरकस्तिष्ठति । तम् अस्योपाहर । ) [80]

**द्वितीया**–तधा । ( तथा ) ( इति निष्क्रान्ता ) [81]

**बालः** – ताव इमिणा य्येव कीलयिस्सं । ( तावद् अनेनैव क्रीडिष्यामि । ) [82]

( तापसी विलोक्य हसति ) [83]

**राजा** – स्पृहयामि दुर्ललितकायास्मै । ( निश्श्वस्य ) [ 84 ]

आलक्ष्यदन्तमुकुलान् अनिमित्तहासै-
रव्यक्तवर्णरमणीयवचः प्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा परुषीभवन्ति ।। 7 – 18 ।।[ 85]

**तापसी** – ( साङ्गुलितर्जनम् ) भोदु । ण मं गणअसि । ( पार्श्वम् अवलोक्य ) को एत्थ इसिकुमारकाणं । ( राजानं दृष्ट्वा ) भद्दमुह, एहि मोएहि दाव इमिणा दुम्मोहहत्थग्गेण डिम्बकलिणा बाधीअमाणं बालमइन्दअं । ( भवतु, न मां गणयसि । कोऽत्र ऋषिकुमारकाणाम् । भद्रमुख, एहि मोचय तावद् अनेन दुर्मोचहस्ताग्रेण डिम्बकरिणा बाध्यमानं बालमृगेन्द्रम् । ) [86]

**राजा** – तथे- (त्युपगम्य ) अयि महर्षिपुत्र, [87]

एवमाश्रमविरुद्धवृत्तिना
संयमी किमिति जन्मदस्त्वया ।
सत्त्वसंश्रयसुखोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ।। 7 – 19 ।।[88]

**तापसी** – भोदु । ण खु अअं इसिकुमारओ । ( भवतु । न खलु अयम् ऋषिकुमारकः । ) [89]

**राजा** – आकारसदृशं चेष्टितम् एवास्य कथयति । स्थानप्रत्ययात् तु वयम् अतर्किणः ।

( सिंहं मोचयित्वा, यथाभ्यर्थितम् अनुष्ठितम् । बालस्पर्शम् अनुभूयात्मगतम् । ) [90]

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रेषु सुखं ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्याद्
यस्यायम् अङ्गात् कृतिनः प्रसूतः ।। 7 – 20 ।। [91]

**तापसी** – ( उभावलोक्य ) अच्छरीअं अच्छरीअं । ( आश्चर्यम् आश्चर्यम् । ) [92]

**राजा** – किम् इव । [93]

**तापसी** – अस्स बालस्स असम्बद्धे वि भद्दमुहे संवादिणी आकिदि त्ति विम्हिद म्हि । अवि अ, अच्चन्त-परिइदस्स विअ अप्पडिलोमो एसो दे संवुत्तो । ( अस्य बालस्यासम्बद्धेऽपि भद्रमुखे संवादिन्या-

कृतिरिति विस्मिताऽस्मि । अपि च, अत्यन्तपरिचितस्येवाप्रतिलोम एष ते संवृत्तः । ) [ 94]

**राजा –** ( बालम् उपलालयन् ) न चेन्मुनिकुमारोऽयम्, अथ कोऽस्य व्यपदेशः ।

**तापसी –** पोरवो इति । ( पौरवः इति )[5] [95]

**राजा –** ( अपवार्य[6] ) कथम् एकान्वयोऽयमस्माकम् । अतः खलु मदनुकारिणम् अत्रभवती मन्यते ।
( प्रकाशम् ) अस्त्येतत् पौरवाणाम् अन्त्यं कुलव्रतम् । [96]

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थम् उशन्ति ते निवासम् ।
नियतैकमुनिव्रतानि[7] पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम् ।। 7 – 21 ।। [97]

न पुनरात्मगत्या मानुषाणाम् एष विषयः । [ 98 ]

**तापसी –** णं जधा भद्दमुहो भणादि । अच्छरासम्बन्धेण पुणो इमस्स बालस्स जणणी एत्थ य्येव गुरुणो तवोवणे पसूदा । ( ननु यथा भद्रमुखो भणति – अप्सरसम्बन्धेन पुनरस्य बालस्य जनन्यत्रैव गुरोस्तपोवने प्रसूता । ) [99]

**राजा –** ( आत्मगतम् ) दत्तं द्वितीयमिदमाशङ्काजननम् । ( प्रकाशम् ) तत्रभवती किमाख्यस्य राजर्षेः पत्नी । [100]

**तापसी –** को तस्स धम्मदारपरिच्चाइणो णामधेअं गिण्हीसदि । ( कस्तस्य धर्मदारपरित्यागिनो नामधेयं ग्रहीष्यति । ) [101]

**राजा –** ( अपवार्य[8] ) इयं खलु कथा मामेव लक्षीकरोति । किं तावद् अस्य शिशोर्मातरं नामतः पृच्छेयम् । अथवा, अन्याय्यः परदारव्यवहारः । [ 102 ]

( प्रविश्य मृन्मयमयूरहस्ता द्वितीया ) [103]

**तापसी –** सव्वदमण, सउन्तलावण्णं पेक्ख[9] । ( सर्वदमन, शकुन्तलावण्यं पश्य । ) [ 104 ]

**बालः –** ( सदृष्टिक्षेपम् ) कहिं अज्जू । ( कुत्रार्या माता ) [ 105 ]

( उभे प्रहसिते ) [ 106 ]

**प्रथमा –** णामसादिस्सेण छलिदो मादुअच्छलओ । ( नामसादृश्येन छलितो मातृवत्सलकः । ) [ 107 ]

**द्वितीया –** वच्छ, सउन्तला भणादि । इमस्स कित्तिम-मऊरस्स रमणीअदं पेक्खत्ति । ( वत्स, शकुन्तला भणति । अस्य कृत्रिम-मयूरस्य रमणीयतां प्रेक्षस्वेति । ) [ 108 ]

**राजा –** ( अपवार्य[10] ) किं शकु[न्त]लेति मातुराख्या । सन्ति पुनर्नामसादृश्यानि । अपि नाम मृगतृष्णिकेव नायमन्तेन प्रस्तावो विषादाय कल्पते । [109]

---

[5] काश्मीर-पाठे दाक्षि.-पाठे च पुरुवंश इति । किन्तु पूर्वापरसन्दर्भेषु सर्वत्र दुष्यन्तः पौरव इति शब्देनैव सम्बोध्यते । ( 1. कः पौरवे शासति वसुमतीम्0, 2. पोरव, रक्ख विणअं । इत्यादिषु स्थलेषु )

[6] अपवार्यत्वेनेयं रंगसूचना मैथिल-पाठाद् गृहीता ।

[7] का.-दा.-पाठयोः " नियतैकयतिव्रतानी " ति ।, किन्तु रघुवंशे " वार्धक्ये मुनिवृत्तीनामि " ति वचनात् ।

[8] अपवार्यत्वेनेयं रंगसूचना मैथिल-पाठाद् गृहीता ।

[9] का.-पाठे "सव्वदमण, सउन्तला---" इत्येव प्राप्यते ।, किन्तु मै.-पाठस्यात्र ग्रहणं करणीयम्, अभिनवगुप्तेनापि "तापसी – सर्वदमन, शकुन्तलावण्यं पश्य" इत्यस्यैव ग्रहणात् । ( द्रष्टव्यम् ना. शा., षोडशाध्यायानुबन्धाः 16-6 इत्यत्राभिनवभारती, पृ. 350 )

[10] इयमपि रंगसूचना"ऽपवार्ये"त्येव भवितुमर्हति ।

**बालः** – अत्ताके, लोअदि मे भद्दालके एहे मऊले । ( अत्ताके, रोचते मे भद्रालक एष मयूरः ।[110]

( क्रीडणकमादत्ते ) [ 111]

**द्वितीया –** ( आलोक्य ससंभ्रमम् ) अम्मो, रक्खाकरण्डकं से मणिबन्धे ण दीसदि । ( अहो रक्षा-करण्डकमस्य मणिबन्धे न दृश्यते । ) [ 112]

**राजा –** अलमावेगेन । नन्वयम् अस्य सिंहशावकमर्दात् परिभ्रष्टम् । ( आदातुमिच्छति ) [ 113]

**उभे –** मा खु णं आलबिट्ठा । कधं .... गिहीदं येव णेण । ( सविस्मयम् ) ( मा खल्वेनमालम्बिष्ठाः । कथं गृहीतमेवानेन । ) [ 114 ]

( उरो-निहितहस्ते परस्परम् अवलोकयतः ) [115]

**राजा –** किमर्थं प्रतिषिद्धोऽस्मि ।[116]

**प्रथमा –** सुणादु अय्यो । महाप्पहावा एसा खु अवराइदा णाम महोसहि इमस्स दारअस्स जादकम्मसमए भअवदा मारीएण दिण्णा । एदं किल मादापिदरो अत्ताणअं वा वज्जिअ अवरो भूमिपदिदं ण गिण्हादि । ( शृणोत्वार्यः । महाप्रभावैषा खल्वपराजिता नाम महौषधिरस्य दारकस्य जातकर्मसमये भगवता मारीचेन दत्ता, एताम् किल मातापितरावात्मानं वा वर्जयित्वा--ऽपरो भूमिपतितां न गृह्णाति । ) [117]

**राजा –** अथ गृह्णाति, किं भवति । [118]

**प्रथमा –** तदो सप्पो भविअ अण्णं दंसेदि । ( ततस्सर्पो भूत्वाऽन्यं दशति । ) [119]

**राजा –** अथ भवतीभ्यां कदाचिदस्याः प्रत्यक्षीकृता विक्रिया ।[120]

**उभे –** अणेअसो । ( अनेकशः ) [121]

**राजा –** ( सहर्षम् ) तत्किम् खल्विदानीं पूर्णमपि मनोरथं नाभिनन्दामि । [122 ]

( बालं परिष्वजते ) [ 123]

**द्वितीया –** सञ्जदे, एहि, इमं वुत्तान्तं णिअमणिव्वुदाए सउन्तलाए णिवेदेम्ह । ( संयते, एहि इमं वृत्तान्तं नियमनिर्वृतायै शकुन्तलायै निवेदयामः । ) [ 124]

**प्रथमा –** एवम् करेम्ह । ( इति निष्क्रान्ते तापस्यौ ) [125]

**बालः –** मुञ्च मं, जाव अज्जूसकासं गच्छामि । ( मुञ्च मां, यावद् मातृसकाशं गच्छामि । ) [126 ]

**राजा –** पुत्रक, मयैव सह मातरं नन्दयिष्यसि । [127]

**बालः** – मम खु तादे दुश्शन्ते, ण तुवं । ( मम खलु तातो दुःषन्तो, न त्वम् । ) [128]

**राजा** – ( सस्मितम् ) एष विवाद एव मां प्रत्याययति । [129]

( ततः प्रविशति एकवेणीधरा शकुन्तला ) [130]

**शकुन्तला** –विआरकाले वि पकिदित्थं तं सव्वदमणस्स ओसहिं सुणिअ ण मे आसासो अत्तणो भाअधेएसु । अह वा, जधा मे अक्खमालाए आचक्खिदं तदा(धा) सम्भावो एदं । ( विकारकालेऽपि प्रकृतिस्थां तां सर्वदमनस्यौषधिं श्रुत्वा न म आश्वास आत्मनो भागधेयेषु । अथवा, यथा मेऽक्षमालया आख्यातं, तथा सम्भाव्यत एतत् । ) ( परिक्रामति ) [131 ]

**राजा** – ( शकुन्तलां दृष्ट्वा ) अये इयमत्रभवती शकुन्तला । [ 132]

वसने परिधूसरे वसाना
नियमक्षाममुखी कृतैकवेणिः ।

अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्ति ।। 7 – 22 ।। [133]

**शकुन्तला –** ( राजानं दृष्ट्वा ) ण क्खु अय्यउत्तो विअ । ता को णु खु एसो किदरक्खामङ्गलं दारअं मे हत्थसंसग्गेण दुसेदि । ( न खल्वार्यपुत्र इव । तत् को नु खल्वेष कृतरक्षामङ्गलं दारकं मे हस्तसंसर्गेण दूषयति । ) [ 134]

**बालः –** ( मातरमुपेत्य ) अज्जुए, एस कोवि परो, को मं माणुसो पुत्तके त्ति आलवदि । ( अज्जुके, एष कोऽपि परः । को मां मानुषः पुत्रक इत्यालपति । ) [135]

**राजा –** प्रिये, क्रौर्यमपि मे त्वयि प्रयुक्तम् अनुकूलपरिणामं संवृत्तम् । यतोऽहमिदानीं त्वया प्रत्यभिज्ञातम् आत्मानमिच्छामि । [136 ]

**शकुन्तला –** ( सहर्षम् ) अय्यउत्त[11] य्येव एसो । ( आर्यपुत्र एवैषः । ) [137]

**राजा –**

स्मृतिभिन्नमोहतमसो दिष्ट्या
प्रमुखे स्थितासि मे सुमुखि ।
उपरागान्ते शशिन-
स्समुपनतो रोहिणीयोगः ।। 7 – 23 ।।[138]

**शकुन्तला –** जअदु जअदु ..... ।[12] ( जयतु जयतु .... । ) [139]

( इत्यर्धोक्ते बाष्पकण्ठी बाष्पं विहरति ) [ 140 ]

**राजा –** प्रिये,

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टम् असंस्काराल्लोलालकम्[13] इदं मुखम् ।। 7 – 24 ।। [141]

**बालः –** अज्जुए । को वा एसो । ( अज्जुके, क एवैषः । ) [ 142]

**शकुन्तला –** वच्छ, भाअधेआणि मे पुच्छ । ( रोदिति ) ( वत्स, भागधेयानि मे पृच्छ । ) [143]

**राजा –** ( प्रणिपत्य ) [144]

सुतनु हृदयात् प्रत्यादेश-व्यलीकम् अपैतु ते
किमपि मनसस्सम्मोहो मे तदा बलवान् अभूत् ।
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया
प्रबलतमसाम् एवं प्रायः शुभेष्वपि वृत्तयः ।। 7 – 25 ।।[ 145]

**शकुन्तला –** उत्थेदु अय्यउत्तो । णं मम सुहपदिबन्धअं पुराकिदं तेसु दिअसेसु परिणामाभिमुहआसि । जेण साणुक्कोसो वि अय्यउत्तो मए तधाविओ संवुत्तो । ( उत्तिष्ठत्वार्यपुत्रः । ननु मम सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामाभिमुखम् आसीद् । येन सानुक्रोशोऽप्यार्यपुत्रो

---

[11] इतः पूर्वम्- "हिअअ, समस्सस समस्सस । पहरिअ णिव्वुत्तमच्छरेण अणुकम्पिदम्हि देव्वेण ।" इत्येका स्वगतोक्तिरपि वर्तते । किन्तु सा प्रक्षिप्ता प्रतिभाति ।

[12] काश्मीर-पाठे, दाक्षि.-पाठे च " आर्यपुत्र " इत्यधिकं पठ्यते । मै.-बं.-पाठयोर्नास्त्ययं शब्दः । यतो ह्यत्रोत्तरवर्तिनि श्लोके जयेत्यस्यैवोल्लेखो विद्यते ।

[13] विरहिण्याः शकुन्तलायाः कृते मैथिल-पाठान्तरमेव समीचीनं प्रतिभाति ।, का.-पाठे"ऽसंस्कारपाटलौष्ठमि" ति विशेषणं न प्रसंगोचितम्, अतस्त्याज्यम् ।

मयि तथाविधस्संवृत्तः । ) [ 146]

( राजोत्तिष्ठति ) [147]

**शकुन्तला –** अध कधं अय्यउत्तेण सुमरिदो अअं जणो । ( अथ कथमार्यपुत्रेण स्मृतोऽयं जनः । ) [148 ]

**राजा –** उद्धृतशल्यविष(श)दः करोमि, करिष्यामि । [ 149]

मोहान् मया सुतनु पूर्वम् उपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिधावमानः ।
तं तावद् आकुलित-पक्ष्म-विलग्नम् अद्य
कान्ते प्रमृज्य विगतानुशयो भवामि ।। 7 – 26 ।। [ 150]

( यथोक्तमनुतिष्ठति ) [151]

**शकुन्तला –** ( प्रमृष्टबाष्पा, नाममुद्रां दृष्ट्वा ) अय्यउत्त, णणु तं अङ्गुलीअं । ( आर्यपुत्र, ननु तद् अङ्गुलीयम् । ) [152]

**राजा –** अथ किम् । अस्माद् अद्भुतोपलम्भान् मया स्मृतिर्लब्धा । [153]

**शकुन्तला –** सुमुहिकादुं खणेण जं तदा अय्यउत्तस्स पच्चक्खकरणे दुल्लहं मे संवुत्तम् । ( सुमुखीकर्तुं क्षणेन यत् तदार्य्यपुत्रस्य प्रत्यक्षकरणे दुर्लभं मे संवृत्तम् । ) [154]

**राजा –** तेन ह्यृतुसमागमाशंसि प्रतिपाद्यतां लता कुसुमम् । [155]

**शकुन्तला –** ण से वीससामि । अय्यउत्तो एव णं धारेदु । ( नास्य विश्वसामि । आर्यपुत्र एवैनद् धारयतु । ) [156]

( प्रविश्य ) **मातलिः –** दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्धते । [157]

**राजा –** सुहृत्संपादितत्वाद् उत्तरफलो हि मनोरथः । मातले, न खलु विदितोऽयम् आखण्डलस्यार्थः । [ 158]

**मातलिः –** ( सस्मितम् । किमीश्वराणां परोक्षम् [14]। एहि, भगवांस्ते मारीचो दर्शनं वितरति । [159]

**राजा –** शकुन्तले, अवलम्ब्यतां पुत्रः । त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि ।[ 160]

**शकुन्तला –** अरिहामि अय्यउत्तेण सह समीवं गन्तुम् । ( अर्हाम्यार्यपुत्रेण सह, समीपं गन्तुम्?। ) [161]

**राजा –** आचरितमेतद् अभ्युदयकालेषु । एहि एहि । ( सर्वे परिक्रामन्ति ) [ 162]

( ततः प्रविशत्यदित्या सार्धम् अर्धासनस्थो मारीचः ) [ 163 ]

**मारीचः –** ( राजानम् अवलोक्य ) दाक्षायणि, [ 164]

पुत्रस्य ते रणशिरस्ययम् अग्रगामी
दुःषन्त इत्यभिहितो भुवनस्य भर्ता ।
चापेन यस्य विनिवर्तितकर्म जातं
तत्कोटिमत् कुलिशम् आभरणं मघोनः ।। 7 – 27 ।।[ 165 ]

**अदितिः –** संभावणीआ से खु आकिदि । ( सम्भावनीयास्य खल्वाकृतिः । ) [166]

**मातलिः –** भूतलपते, एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावक्लोकयतः । तदुपसर्पतु । [167]

**राजा –** मातले,

---

[14] काश्मीर-पाठे वाक्यमिदं नास्ति । किन्तु तद् भवितुमर्हति । मै.-पाठानुरोधाद् गृहीतमिदम् ।

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्तारं भुवनत्रयस्य सुषुवे यद् यज्ञभागेश्वरम् ।
यस्मिन्नात्मभावः परोऽपि पुरुषश्चक्रे भवायास्पदं
ब्रह्मानन्तरविश्वयोनिसहितं द्वन्द्वं तदेतद् वशी ।। 7 – 28 ।। [168 ]

**मातलिः –** अथ किम् । [169]

**राजा –** ( प्रणिपत्य ) उभावपि वां वासवनियोज्यो दुःषन्तः प्रणमति । [170]

**मारीचः –** वत्स, चिरं पृथिवीं पालय । [171]

**अदितिः –** अप्पदिरहो होहि । ( अप्रतिरथो भव । ) [172]

**शकुन्तला –** दारकेण सहिता पादवन्दणं करेमि । ( दारकेण सहिता पादवन्दनं करोमि । ) [173]

**मारीचः –** वत्से, चिरम् अविधवा भव । [174]

आखण्डलसमो भर्ता जयन्तप्रतिमस्सुतः ।
आशीरन्या न ते योज्या पौलोमीमङ्गला भव ।। 7 – 29 ।। [175]

**अदितिः –** जादे, भट्टिणो बहुमदा होहि । अअं च दे देहओ वच्छओ उभअपक्खं अलंकरेदु । ता उवविसध ।

( जाते, भर्तुर्बहुमता भव । अयं च ते देहजो वत्सक उभयपक्षम् अलङ्करोतु ।
तद् उपविशत । ) [ 176]

( सर्वे प्रजापतिनाभिहितम् आसनम् उपविशन्ति ) [177]

**मारीचः –** ( एकैकम् निर्दिशन् ) [ 178]

दिष्ट्या शकुन्तला साध्वी,
सदपत्यमिदम्, भवान् ।
श्रद्धा वित्तं विधिश्चेति
त्रितयं तत् समागतम् ।। 7 – 30 ।। [179]

**राजा –** भगवन्, प्राग् अभिप्रेता सिद्धिः, पश्चात् दर्शनम् । इत्यपूर्वो भगवतोऽनुग्रहः ।
पश्यतु भगवान् । [180]

उदेति पूर्वं कुसुमं, ततः फलं,
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तकयोरयं विधि-
स्तव प्रसादस्य पुरस्तु संपदः ।। 7 – 31 ।।[ 181 ]

**मातलिः –** एवं विश्वगुरवः प्रसीदन्ति । [ 182]

**राजा –** भगवन्, इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित्कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन् नपराद्धोऽस्मि तत्रभवतः कण्वस्य । पश्चाद् एनाम् अङ्गुलीयक-दर्शनाद् आरूढस्मृतिरूढपूर्वाम् अनुगतोऽस्मि । तच्चित्रमेव मे प्रतिभाति । [183]

यथा गजे नेतरपक्षरूपे( ? ),
तस्मिन्नतिक्रामति संशयस्स्यात् ।
पदानि दृष्ट्वा तु भवेत् प्रतीति-
स्तथाविधो मे मनसो विकारः ।। 7 – 32 ।।[ 184]

**मारीचः** – वत्स, अलम् आत्मापचारशङ्कया । सम्मोहोऽपि त्वय्युपपन्नः । यतः श्रूयताम् – [ 185 ]

**राजा** - अवहितोऽस्मि । [ 186]

**मारीचः** – यदैवाप्सरस्तीर्थावतरणात् प्रत्यक्षवैक्लव्यां शकुन्तलाम् आदाय मेनका दाक्षायणीसकाशमागता । तदैव ध्यानादधिगतोऽस्मि । दुर्वाससः शापादियं तपस्विनी सहधर्मचारिणी प्रत्यादिष्टा, नान्यथेति । स चाङ्गुलीयकदर्शनावसरः । [187]

**राजा** – ( सोच्छ्वासम् ) एषोऽहं वचनीयान् मुक्तोऽस्मि । [188]

**शकुन्तला** – ( आत्मगतम् ) दिट्ठिआ अकामपच्चादेसी अय्यउत्तो । ण उण सत्तं अत्ताणअं सुमरामि । अधवा, ण सुदो धुवं अण्णहिअआए मए सावो । जदो सहीहिं अच्चादरेण सन्दिट्ठम्हि भत्तुणो अङ्गुलीअअं देसहे त्ति । ( दिष्ट्याऽकामप्रत्यादेश्यार्यपुत्रः । न पुनश्शप्तम् आत्मानं स्मरामि । अथवा न श्रुतो ध्रुवम् अन्यहृदयया मया शापः । यतस्सखीभ्याम् अत्यादरेण सन्दिष्टाऽस्मि भर्तुर् अङ्गुलीयकं दर्शयेति । ) [189]

**मारीचः** – वत्से, विदितार्थाऽसि । तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः कर्तव्यः । [190] पश्य,

शापाद् इति प्रतिहतस्मृतिलोपरूक्षे
भर्तर्यपेततमसि प्रभुता तथैव ।
छाया न मूर्छति मलोपहतप्रसादे,
शुद्धे तु दर्पणतले सुभगावकाशा[15] ।। 7 – 33 ।। [191]

**राजा** – यथा भगवान् आह । [192]

**मारीचः** –वत्स, कच्चिद् अभिनन्दितस्त्वया विधिवदस्माभिरनुष्ठितजातकर्मा पुत्र एष शाकुन्तलेयः । [193]

**राजा** – भगवन्नत्र खलु मे वंशप्रतिष्ठा । [194]

**मारीचः** – तथा तत् । भाविनं चक्रवर्तिनं एनम् अवगच्छतु भवान् । [195] पश्य,

रथेनानुद्धातस्तिमितगतिरातीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधाम् अप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात् सर्वदमनः
पुनर्यास्यत्याख्यां भरत इति सर्वस्य भरणात् ।। 7 – 34 ।। [196]

**राजा** – भगवता कृतसंस्कारे सर्वम् अस्मिन् आशंसामहे । [197]

**अदितिः** – इमाए आनन्दमणोरहसम्पत्तिए कण्णो वि दाव सुदवित्थारो करिअदु । मेणआ इध य्येव सण्णिहिदा । ( अनया आनन्दमनोरथसम्पत्त्या कण्वोऽपि तावच्छ्रुतविस्तारः क्रियताम् । मेनकेहैव सन्निहिता । ) [198]

**शकुन्तला** – मणोगदं मे मन्तिदं भअवदीए । ( मनोगतं मे मन्त्रितं भगवत्या । ) [199 ]

**मारीचः** – सर्वमेतत् तपःप्रभावात् प्रत्यक्षं तत्रभवतः कण्वस्य । [200]

**राजा** – हन्त खलु न स्स(स)मभिक्रुद्धो गुरुः । [201]

**मारीचः** – तथाप्यसौ प्रियमस्माभिः श्रावयितव्यः । कः कोऽत्र भोः । [ 202 ]

( प्रविश्य ) **शिष्यः** – भगवन्, अयमस्मि । [ 203]

---

[15] निखिलाप्युक्तिरियं शकुन्तलामुद्दिश्य कथिता, किन्तु नास्ति तस्याः प्रतिवचनम् । अतोऽनुमीयते यदत्र शकुन्तलायाः किमपि वाक्यं विलुप्तं स्याद् ।, मैथिल-बंगीयादिषु पाठेष्वपि नोपलभ्यते तस्याः प्रतिवचनम् ।

**मारीचः** – वत्स गालव, मद् वचनाद् इदानीमेव विहायसा गत्या तत्रभवते कण्वाय प्रियम् आवेदय । यथा शकुन्तला दुर्वाससः शापविनिवृत्तिसमुपागतस्मृतिना दुःषन्तेन प्रतिगृहीतेति । [204]

**शिष्यः** – यदाज्ञापयति भगवान् । ( प्रणम्य निष्क्रान्तः ) [ 205]

**मारीचः** – ( राजानं प्रति ) वत्स, त्वमपि सापत्यदारः सन्निहितं सख्युराखण्डलस्य रथमारुह्य स्वराजधानीं प्रतिष्ठस्व । [206]

**राजा** – यदाज्ञापयति भगवान्[16] । [207 ]

**मारीचः** – वत्स, तद् उच्यताम् । किं ते भूयः प्रियम् उपहरामि । [208]

**राजा** – ( सहर्षम् प्रणमन् ) यद् अतः परं मे भगवान् प्रसादं कर्तुम् अर्हति । [ 209 ]

ततः – ( **भरतवाक्यम्** )

प्रवर्ततां प्रकृतिहिताय पार्थिव-
स्सरस्वती श्रुतिमहतां[17] महीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतभक्तिरात्मभूः ।। 7 – 35 ।।[ 210 ]

**।। इति निष्क्रान्तास्सर्वे ।।** [ 211 ]

**।। इति सप्तमोऽङ्कः ।।**[ 212]
**।। समाप्तं चेदम् अभिज्ञानशकुन्तलाख्यं नाटकम् ।।**

[16] का.-मै.-बं.-पाठेष्वितः परं मारीचस्य मुखे "क्रतुभिरुचितभागांस्त्व0", "तव भवतु बिडौजाः प्राज्यवृष्टिः0" इति च । उभावपि श्लोकौ प्रक्षिप्तौ ।, ( का.-पाठे केवलं प्रथम एव ), ( प्रक्षिप्त-श्लोक-संख्ये- 33 एवं 34 )

[17] "श्रुतिमहती"त्येतस्मिन् पाठभेदेऽपि समाना मौलिकता दरीदृश्यते ।, किन्तु "श्रुतमहताम्" पाठः परवर्तिनि काले समायातः प्रतीयते ।

## परिशिष्ट – 3

### ।। प्रक्षिप्त श्लोक सूचि ।।

| *क्रम* | *अंक* | *प्रथम चरण की पदावली* | *वाचना का नाम* |
|---|---|---|---|
| | 1 | इसि चुम्बिआइं भमरेहिं0 ( परिवर्तित-पाठ ) | दाक्षिणात्य |
| 1 | 1 | न खलु न खलु बाणः संनिपात्योऽयमस्मिन्0 | मैथिली वाचना |
| 2 | 1 | जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव0 | दाक्षिणात्य |
| 3 | 1 | कठिनमपि मृगाक्ष्या वल्कलं कान्तिरूपम्0 | बंगाली |
| 4 | 1 | लोलां ... वाद्यैर्विना नर्तकी0 –श्रीडमरुवल्लभ-पंत की आवृत्ति, पृ. 21 | उत्कलीय |
| 5 | 1 | तुरगखुरहतस्तथा हि रेणु0 । | काश्मीरी-आदि |
| 6 | 2 | न नमयितुमधिज्यमुत्सहिष्ये0 । | काश्मीरी-आदि |
| 7 | 2 | अनवरतधनुर्ज्यास्फालनक्रूरपूर्वम्0 । | काश्मीरी-आदि |
| 8 | 3 | अद्यापि नूनं हरकोपवह्निन0 | काश्मीरी |
| 9 | 3 | वृथैव संकल्पितशतै0 | मैथिली |
| 10 | 3 | संमीलन्ति न बन्धनकोशाः0 | मैथिली |
| 11 | 3 | शशिकरविशदान्य0 | बंगाली |
| 12 | 3 | अयं स यस्मात् प्रणयावधीरणाम्0 | मैथिली |
| 13 | 3 | अपराधमिमं ततः सहिष्ये0 | काश्मीरी |
| 14 | 3 | अप्यौत्सुक्ये महति दयितप्रार्थना0 | काश्मीरी |
| 15 | 3 | गान्धर्वेण विवाहेन बह्व्योः मुनिकन्यका0 | मैथिली |
| 16 | 3 | हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा0 । | काश्मीरी |
| 17 | 3 | चारुणा स्फुरितेनायमपरिक्षतकोमलः0 । | का-मै-बं. |
| 18 | 3 | अपरिक्षतकोमलस्य यावत्0 ( परिवर्तति-पाठ) | दाक्षिणात्य |
| 19 | 3 | रहः प्रत्यासत्तिं यदि सुवदना यास्यति0 | काश्मीरी |
| 20 | 4 | यात्येकतोस्तशिखरं पतिरोषधीनाम्0 | काश्मीरी |
| 21 | 4 | अन्तर्हिते शशिनि सैव कुमुद्वतीम्0 | काश्मीरी |
| --- | 4 | अनुमतगमना शकुन्तला तरुभिः0 ( सम्भवतः ) | काश्मीरी |
| 22 | 5 | मय्येवमस्मरणदारुणचित्तवृत्तौ0 | मैथिली |
| 23 | 5 | तुम्हे य्येव पमाणं जाणीध, धम्मत्थिदिं0 | काश्मीरी |
| 24 | 6 | चूतं हर्षितपिककं जीवित0 ( परिवर्तित-पाठ ) | दाक्षिणात्य |
| 25 | 6 | चूतानां चिरनिर्गतापि कलिका बध्नाति0 | काश्मीरी |
| 26 | 6 | उपहितस्मृतिरङ्गुलिमुद्रया0 | काश्मीरी |
| 27 | 6 | दीर्घापाङ्गविसारि नेत्र0 | मैथिली |
| 28 | 6 | अस्यास्तुंगमिव स्तनद्वयम्0- (श्रीडमरुवल्लभ) | बंगाली-उत्कलीय |
| 29 | 6 | यद्यत् साधु न चित्रेस्मिन्0 | मैथिली |
| 30 | 6 | प्रागेव जरसा कम्पः0 | काश्मीरी- |
| 31 | 6 | तस्याग्रभूमेर्गृहनीलकण्ठै0 | मैथिली |
| 32 | 6 | अहन्यहन्यात्मनः एव0 | मैथिली |
| 33 | 7 | क्रतुभिरुचितभागांस्त्व0 | काश्मीर |
| 34 | 7 | तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु0 | मैथिली |

## परिशिष्ट – 2

## ।। पाँच रंगावृत्तियों में श्लोकों का स्वीकार / अस्वीकार ।।

इस परिशिष्ट में काश्मीरी रंगावृत्ति से आरम्भ करके मैथिली, बंगाली, दाक्षिणात्य और देवनागरी रंगावृत्ति तक की पाठयात्रा में श्लोक-सम्बन्धी वृद्धि-ह्रास का एवं अमुक श्लोकों के उपस्थिति क्रमांक में हुए परिवर्तनों का जो चित्र दिख रहा है उसको कोष्टकाकार में दिया जाता है । तथा विशेष रूप में पुनर्गठित प्रथम अनुमित पाठ में किन श्लोकों का स्वीकार हुआ है ?- वह भी जोड दिया हैः--

| अंक | श्लोक का प्रथम चरण | काश्मीरी-क्रम | मैथिली-क्रम | बंगाली-क्रम | दाक्षिणात्य-क्रम | देवनागरी-क्रम | पुनर्गठित-क्रम |
|---|---|---|---|---|---|---|---|
| | **प्रथमोऽङ्कः ।।** | | | | | | |
| 1 | या सृष्टिः स्रष्टुराद्या वहति विधिहुतं | 1 | 1 | 1 | 1 | 1 | 1 |
| 1 | आ परितोषाद् विदुषां न साधु | 2 | 2 | 2 | 2 | 2 | 2 |
| 1 | सुभगसलिलावगाहाः पाटलि0 | 3 | 3 | 3 | 3 | 3 | 3 |
| 1 | खणचुम्बिआइँ भमरेहिँ उअह0 | 4 | 4 | 4 | 4 | 4 | 4 |
| 1 | तवास्मि गीतरागेण हारिणा0 | 5 | 5 | 5 | 5 | 5 | 5 |
| 1 | कृष्णसारे ददच्चक्षुस्त्वयि 0 | 6 | 6 | 6 | 6 | 6 | 6 |
| 1 | ग्रीवाभङ्गाभिरामं मुहु0 | 7 | 7 | 7 | 7 | 7 | 7 |
| 1 | मुक्तेषु रश्मिषु निरायतपूर्व0 | 8 | 8 | 8 | 8 | 8 | 8 |
| 1 | यदालोके सूक्ष्मं व्रजति सहसा0 | 9 | 9 | 9 | 9 | 9 | 9 |
| 1 | न खलु न खलु बाणः संनिपात्यो0 | -- | 10 | 10 | (10) | -- | -- |
| 1 | तत्साधु कृतसंधानं प्रतिसंहर0 | 10 | 11 | 11 | 11 | 10 | 10 |
| 1 | जन्म यस्य पुरोर्वंशे युक्तरूपं0 | -- | -- | -- | 12 | 11 | -- |
| 1 | धन्यास्तपोधनानां प्रतिहतविघ्ना0 | 11 | 12 | 12 | 13 | 12 | 11 |
| 1 | नीवाराः शुककोटरार्भकमुख0 | 12 | 13 | 13 | 14 | 13 | 12 |
| 1 | कुल्याम्भोभिः पवनचपलैः 0 | 13 | 14 | 14 | -- | -- | 13 |
| 1 | शान्तमिदमाश्रमपदं स्फुरति 0 | 14 | 15 | 15 | 15 | 14 | 14 |
| 1 | शुद्धान्तदुर्लभमिदं वपुराश्रम0 | 15 | 16 | 16 | 16 | 15 | 15 |
| 1 | इदं किलाव्याजमनोहरं वपु0 | 16 | 17 | 17 | 17 | 16 | 16 |
| 1 | इदमुपहितसूक्ष्मग्रन्थिना0 | -- | 18 | 18 | -- | -- | 17 |
| 1 | सरसिजमनुविद्धं शैवलेनापि0 | 17 | 19 | 19 | 18 | 17 | 18 |
| 1 | कठिनमपि मृगाक्ष्या वल्कलं0 | -- | -- | 20 | -- | -- | -- |
| 1 | अधरः किसलयरागः कोमल0 | 18 | 20 | 21 | 19 | 18 | 19 |
| 1 | असंशयं क्षत्रपरिग्रहक्षमा0 | 19 | 21 | 22 | 20 | 19 | 20 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 1 | यतो यतः षट्चरणो भिवर्तते0 | -- | 22 | 23 | -- | -- | 21 |
| 1 | चलापाङ्गां दृष्टिं स्पृशसि0 | 20 | 23 | 24 | 21 | 20 | 22 |
| 1 | कः पौरवे वसुमतीं शासति0 | 21 | 24 | 25 | 22 | 21 | 23 |
| 1 | मानुषीभ्यः कथं नु स्यादस्य0 | 22 | 25 | 26 | 23 | 22 | 24 |
| 1 | वैखानसं किमनया व्रतमाप्र0 | 23 | 26 | 27 | 24 | 23 | 25 |
| 1 | भव हृदय साभिलाषं संप्रति0 | 24 | 27 | 28 | 25 | 24 | 26 |
| 1 | अनुयास्यन् मुनितनयां सहसा0 | 25 | 28 | 29 | 26 | 25 | 27 |
| 1 | स्रस्तांसावतिमात्रलोहिततलौ0 | 26 | 29 | 30 | 27 | 26 | 28 |
| 1 | वाचं न मिश्रयति यद्यपि0 | 27 | 30 | 31 | 28 | 27 | 29 |
| 1 | तुरगखुरहतस्तथा हि रेणुर्विटप0 | 28 | 31 | 32 | 29 | 28 | --- |
| 1 | तीव्राघातादभिमुखतरुस्कन्ध0 | 29 | 32 | 33 | 30 | 29 | 30 |
| 1 | गच्छति पुरः शरीरं धावति0 | 30 | 33 | 34 | 31 | 30 | 31 |

| | **द्वितीयोऽङ्कः ।।** | का.-क्रम | मै.-क्रम | बं.-क्रम | दाक्षि.-क्रम | देव.-क्रम | पुनर्-गठित |
|---|---|---|---|---|---|---|---|
| 2 | कामं प्रिया न सुलभा मनस्तु0 | 1 | 1 | 1 | 1 | 1 | 1 |
| 2 | स्निग्धं वीक्षितमन्यतो पि नयने | 2 | 2 | 2 | 2 | 2 | 2 |
| 2 | न नमयितुमधिज्यमुत्सहिष्ये0 | 3 | 3 | 3 | 3 | 3 | --- |
| 2 | अनवरतधनुर्ज्यास्फालन0 | 4 | 4 | 4 | 4 | 4 | --- |
| 2 | मेदश्छेदकृशोदरं लघु भवत्यु0 | 5 | 5 | 5 | 5 | 5 | 3 |
| 2 | गाहन्तां महिषा निपानसलिलं0 | 6 | 6 | 6 | 6 | 6 | 4 |
| 2 | शमप्रधानेषु तपोवनेषु गूढं0 | 7 | 7 | 7 | 7 | 7 | 5 |
| 2 | ललितोप्सरोभवं किल मुनेरप | 8 | 9 | 9 | 8 | 8 | 6 |
| 2 | निराकृतनिमेषाभिर्नेत्रपंक्ति0 | 9 | 8 | 8 | -- | -- | 7 |
| 2 | चित्ते निवेश्य परिकल्पित0 | 10 | 10 | 10 | 9 | 9 | 8 |
| 2 | अनाघ्रातं पुष्पं किसलयमलूनं0 | 11 | 11 | 11 | 10 | 10 | 9 |
| 2 | अभिमुखे मयि संवृतमीक्षितं0 | 12 | 12 | 12 | 11 | 11 | 10 |
| 2 | दर्भाङ्कुरेण चरणः क्षत0 | 13 | 13 | 13 | 12 | 12 | 11 |
| 2 | यदुत्तिष्ठति वर्णेभ्यो नृपाणां0 | 14 | 14 | 14 | 13 | 13 | 12 |
| 2 | अध्याक्रान्ता वसतिरमुना0 | 15 | 15 | 15 | 14 | 14 | 13 |
| 2 | नैतच्चित्रं यदयमुदधि0 | 16 | 16 | 16 | 15 | 15 | 14 |
| 2 | अनुकारिणि पूर्वेषां युक्ति0 | 17 | 17 | 17 | 16 | 16 | 15 |
| 2 | कृत्ययोर्भिन्नदेशत्वाद्0 | 18 | 18 | 18 | 17 | 17 | 16 |
| 2 | क्व वयं क्व परोक्षमन्मथो मृग0 | 19 | 19 | 19 | 18 | 18 | 17 |

| | तृतीयोऽङ्कः ।। | का.-क्रम | मै.-क्रम | बं.-क्रम | दाक्षि.-क्रम | देव. क्रम | पुनर्-घटित |
|---|---|---|---|---|---|---|---|
| 3 | का कथा बाणसंधाने ज्या0 | 1 | 1 | 1 | 1 | 1 | 1 |
| 3 | जाने तपसो वीर्यं सा बाला0 | 2 | 2 | 2 | 2 | 2 | 2 |
| 3 | अद्यापि नूनं हरकोपवह्निन0 | 3 | 3 | 3 | -- | -- | -- |
| 3 | तव कुसुमशरत्वं शीतरश्मि0 | 4 | 4 | 4 | 3 | 3 | 3 |
| 3 | अनिशमपि मकरकेतुर्मनसो0 | -- | 5 | 5 | -- | -- | 4 |
| 3 | वृथैव संकल्पशतैरजस्रमनङ्ग0 | -- | 6 | 6 | -- | -- | -- |
| 3 | संमीलन्ति न तावद् बन्धनको | -- | 7 | 7 | -- | -- | -- |
| 3 | शक्योऽरविन्दसुरभिः कणवाही | 5 | 8 | 8 | 4 | 4 | 5 |
| 3 | अभ्युन्नता पुरस्तादवगाढा0 | 6 | 9 | 9 | 5 | 5 | 6 |
| 3 | स्तनन्यस्तोशीरं प्रशिथिल0 | 7 | 10 | 10 | 6 | 6 | 7 |
| 3 | शशिकरविशदान्यास्तथा0 | -- | -- | 11 | -- | -- | -- |
| 3 | क्षामक्षामकपोलमानन0 | 8 | 11 | 12 | 7 | 7 | 8 |
| 3 | पृष्टा जनेन समदुःखसुखेन0 | 9 | 12 | 13 | 8 | 8 | 9 |
| 3 | स्मर एव तापहेतुर्निवापयिता0 | 10 | 13 | 14 | 9 | 9 | 10 |
| 3 | अशिशिरतरैरन्तस्तापैर्विवर्ण0 | 11 | 14 | 15 | 10 | 10 | 11 |
| 3 | अयं स ते तिष्ठति संगमोत्सुको0 | 12 | 15 | 16 | 11 | 11 | 12 |
| 3 | अयं स यस्मात् प्रणयावधीरणा | -- | 16 | 17 | -- | -- | -- |
| 3 | उन्नमितैकभ्रूलतमाननमस्याः0 | 13 | 17 | 18 | 12 | 12 | 13 |
| 3 | तुज्झ ण आणे हिअअं मम0 | 14 | 18 | 19 | 13 | 13 | 14 |
| 3 | तपति तनुगात्रि मदनस्त्वाम्0 | 15 | 19 | 20 | 14 | 14 | 15 |
| 3 | संदष्टकुसुमशयनान्याशु0 | 16 | 20 | 21 | 15 | 15 | 16 |
| 3 | इदमनन्यपरायणमन्यथा0 | 17 | 21 | 22 | 16 | 16 | 17 |
| 3 | परिग्रहबहुत्वे पि द्वे प्रतिष्ठे0 | 18 | 22 | 23 | 17 | 17 | 18 |
| 3 | अपराधमिमं ततः सहिष्ये यदि | 19 | 23 | 24 | -- | -- | -- |
| 3 | किं शीकरैः क्लमविमर्दिभि0 | 20 | 24 | 25 | 18 | 18 | 19 |
| 3 | उत्सृज्य कुसुमशयनं नलिनी0 | 21 | 25 | 26 | 19 | 19 | 20 |
| 3 | अप्यौत्सुक्ये महति दयित0 | 22 | 26 | 27 | -- | -- | -- |
| 3 | गान्धर्वेण विवाहेन बह्व्यो थ0 | -- | 27 | 28 | 20 | 20 | -- |
| 3 | त्वं दूरमपि गच्छन्ती हृदयं0 | 23 | 28 | 29 | -- | -- | 21 |
| 3 | अनिर्दयोपभोग्यस्य रूपस्य0 | 24 | 29 | 30 | -- | -- | 22 |
| 3 | मणिबन्धनगलितमिदं संक्रान्तो | 25 | 30 | 31 | -- | -- | 23 |
| 3 | अनेन लीलाभरणेन ते प्रिये0 | 26 | 31 | 32 | -- | -- | 24 |
| 3 | पिपासाक्षामकण्ठेन याचितं0 | 27 | 32 | 33 | -- | -- | 25 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 3 | हरकोपाग्निदग्धस्य दैवेनामृत0 | 28 | 33 | 34 | -- | -- | --- |
| 3 | अयं स ते श्यामलतामनोहरं0 | 29 | 34 | 35 | -- | -- | 26 |
| 3 | चारुणा स्फुरितेनायमपरिक्षत0 | 30 | 35 | 36 | -- | -- | --- |
| 3 | इदमप्युपकृतिपक्षे सुरभि मुखं0 | 31 | 36 | 37 | -- | -- | 27 |
| 3 | अपरिक्षतकोमलस्य यावत्कुसुम | -- | -- | -- | 21 | 21 | -- |
| 3 | मुहुरङ्गुलिसंवृत्ताधरोष्ठं0 | 32 | 37 | 38 | 22 | 22 | 28 |
| 3 | तस्याः पुष्पमयी शरीरलुलिता | 33 | 38 | 39 | 23 | 23 | 29 |
| 3 | रहः प्रत्यासत्तिं यदि सुवदना0 | 34 | 39 | 40 | -- | -- | -- |
| 3 | सायंतने सवनकर्मणि संप्रवृत्ते0 | 35 | 40 | 41 | 24 | 24 | 30 |

| | **चतुर्थोऽङ्कः ।।** | का.-क्रम | मै.-क्रम | बं.-क्रम | दाक्षि. क्रम | देव. क्रम | पुनर्-गठित |
|---|---|---|---|---|---|---|---|
| 4 | विचिन्तयन्ती यमनन्यमानसा0 | 1 | 1 | 1 | 1 | 1 | 1 |
| 4 | कर्कन्धूनामुपरि तुहिनं रञ्जय0 | 2 | 2 | 4 | -- | -- | 2 |
| 4 | पादन्यासं क्षितिधरगुरोर्मूर्ध्नि0 | 3 | 3 | 5 | -- | -- | 3 |
| 4 | यात्येकतो स्तशिखरं पतिरोष | 4 | 4 | 2 | 2 | 2 | -- |
| 4 | अन्तर्हिते शशिनि सैव कुमुद्वती | 5 | 5 | 3 | 3 | 3 | -- |
| 4 | दुःषन्तेनाहितं तेजो दधानां0 | 6 | 6 | 6 | 4 | 4 | 4 |
| 4 | क्षौमं केनचिदिन्दुपाण्डु तरुणा0 | 7 | 7 | 7 | 5 | 5 | 5 |
| 4 | यास्यत्यद्य शकुन्तलेति हृदयं0 | 8 | 8 | 8 | 6 | 6 | 6 |
| 4 | ययातेरिव शर्मिष्ठा पत्युर्बहुमता | 9 | 9 | 9 | 7 | 7 | 7 |
| 4 | अमी वेदीं परितः क्लृप्तधिष्ण्या | 10 | 10 | 10 | 8 | 8 | 8 |
| 4 | पातुं न प्रथमं व्यवस्यति जलं0 | 11 | 11 | 11 | 9 | 9 | 9 |
| 4 | अनुमतगमना शकुन्तला सा तरु | 13 | 12 | 12 | 10 | 10 | 11 |
| 4 | रम्यान्तरः कमलिनीहरितैः सरो | 12 | 13 | 13 | 11 | 11 | 10 |
| 4 | उल्ललइ दब्भकवलं मई0 | 14 | 14 | 14 | 12 | 12 | 12 |
| 4 | संकल्पितं प्रथममेव मया0 | 15 | 15 | 15 | 13 | 13 | 13 |
| 4 | यस्य त्वया व्रणविरोहणम्0 | 16 | 16 | 16 | 14 | 14 | 14 |
| 4 | उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं0 | 17 | 17 | 17 | 15 | 15 | 15 |
| 4 | पुडइणिवत्तन्तरिअं वाहरिओ0 | 18 | 18 | 18 | -- | -- | 16 |
| 4 | अज्ज पिएण विणा जं गमेइ | 19 | 19 | -- | 16 | 16 | 17 |
| 4 | अस्मान् साधु विचिन्त्य संयमध | 20 | 20 | 19 | 17 | 17 | 18 |
| 4 | शुश्रूषस्व गुरून् कुरु प्रियसखी0 | 21 | 21 | 20 | 18 | 18 | 19 |
| 4 | अभिजनवतो भर्तुः श्लाघ्ये0 | 22 | 22 | 21 | 19 | 19 | 20 |
| 4 | यदा शरीरस्य शरीरिणश्च पृथ | 23 | 23 | -- | -- | -- | 21 |
| 4 | भूत्वा चिराय सदिगन्तमही0 | 24 | 24 | 22 | 20 | 20 | 22 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 4 | अपयास्यति मे शोकः कथं0 | 25 | 25 | 23 | 21 | 21 | 23 |
| 4 | अर्थो हि कन्या परकीय एव0 | 26 | 26 | 24 | 22 | 22 | 24 |

| | **पञ्चमोऽङ्कः ॥** | का.-क्रम | मै.-क्रम | बं.-क्रम | दाक्षि क्रम | देव. क्रम | पुनर्-गठित |
|---|---|---|---|---|---|---|---|
| 5 | आचार इत्यधिकृतेन मया0 | 1 | 1 | 1 | 3 | 3 | 1 |
| 5 | क्षणात्प्रबोधमायाति लंघ्यते0 | 2 | 2 | 2 | -- | -- | 2 |
| 5 | भानुः सकृद्युक्ततुरंग एव0 | 3 | 4 | 4 | 4 | 4 | 3 |
| 5 | मनुः प्रजाः स्वा इव तन्त्रयित्वा | 4 | 3 | 3 | 5 | 5 | 4 |
| 5 | अहिणवमहुलोहभाविओ0 | 5 | 8 | 8 | 1 | 1 | 5 |
| 5 | रम्याणि वीक्ष्य मधुरांश्च0 | 6 | 9 | 9 | 2 | 2 | 6 |
| 5 | औत्सुक्यमात्रमवसादयति0 | 7 | 5 | 5 | 6 | 6 | 7 |
| 5 | स्वसुखनिरभिलाषः खिद्यसे0 | 8 | 6 | 6 | 7 | 7 | 8 |
| 5 | नियमयसि विमार्गप्रस्थिता0 | 9 | 7 | 7 | 8 | 8 | 9 |
| 5 | किं तावद् व्रतिनामुपोढतपसां0 | 10 | 10 | 10 | 9 | 9 | 10 |
| 5 | महाभागः कामं नरपतिरभिन्न0 | 11 | 11 | 11 | 10 | 10 | 11 |
| 5 | अभ्यक्तमिव स्नातः शुचिर0 | 12 | 12 | 12 | 11 | 11 | 12 |
| 5 | भवन्ति नम्रास्तरवः फलोद्गमै0 | 13 | 13 | 13 | 12 | 12 | 13 |
| 5 | केयमवगुण्ठनवती नातिपरि0 | 14 | 14 | 14 | 13 | 13 | 14 |
| 5 | कुतो धर्मक्रियाविघ्नः सतां0 | 15 | 15 | 15 | 14 | 14 | 15 |
| 5 | त्वमर्हतां प्राग्रहरः स्मृतो0 | 16 | 16 | 16 | 15 | 15 | 16 |
| 5 | णावेक्खिओ गुरुअणो इमीअ0 | 17 | 17 | 17 | 16 | 16 | 17 |
| 5 | सतीमपि ज्ञातिकुलैकसंश्रयां0 | 18 | 18 | 18 | 17 | 17 | 18 |
| 5 | किं कृतकार्यद्वेषाद् धर्मं प्रति0 | 19 | 19 | 19 | 18 | 18 | 19 |
| 5 | इदमुपनतमेवं रूपमक्लिष्ट0 | 20 | 20 | 20 | 19 | 19 | 20 |
| 5 | कृतावमर्शामनुमन्यमानः0 | 21 | 21 | 21 | 20 | 20 | 21 |
| 5 | व्यपदेशमाविलयितुं समीहसे0 | 22 | 22 | 22 | 21 | 21 | 22 |
| 5 | स्त्रीणामशिक्षितपटुत्वम्0 | 23 | 23 | 23 | 22 | 22 | 23 |
| 5 | न तिर्यगवलोकितं भवति चक्षु0 | 24 | 24 | 24 | -- | -- | --- |
| 5 | मय्येव विस्मरणदारुणचित्तवृ | -- | 25 | 25 | 23 | 23 | -- |
| 5 | तुम्हे य्येव पमाणं जाणध धम्म | 25 | 26 | 26 | -- | -- | -- |
| 5 | अतः समीक्ष्य कर्तव्यं विशेषात्0 | 26 | 27 | 27 | 24 | 24 | 24 |
| 5 | आ जन्मनः शाठ्यमशिक्षितो0 | 27 | 28 | 28 | 25 | 25 | 25 |
| 5 | तदेषा भवतः पत्नी त्यज वैनं0 | 28 | 29 | 29 | 26 | 26 | 26 |
| 5 | यदि यथा वदति क्षितिपस्तथा0 | 29 | 30 | 30 | 27 | 27 | 27 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 5 | कुमुदान्येव शशाङ्कः सविता0 | 30 | 31 | 31 | 28 | 28 | 28 |
| 5 | मूढः स्यामहमेषा वा वदेन्मिथ्ये | 31 | 32 | 32 | 29 | 29 | 29 |
| 5 | सा निन्दन्ती स्वानि भाग्यानि0 | 32 | 33 | 33 | 30 | 30 | 30 |
| 5 | कामं प्रत्यादिष्टां स्मरामि न0 | 33 | 34 | 34 | 31 | 31 | 31 |

| | षष्ठोऽङ्कः ।। | का.-क्रम | मै.-क्रम | बं.-क्रम | दाक्षि. क्रम | देव. क्रम | पुनर्-ग्रथितः |
|---|---|---|---|---|---|---|---|
| 6 | शहये किल ये वि  णिन्दिदे0 | 1 | 1 | 1 | 1 | 1 | 1 |
| 6 | आअम्बहरिअवेण्टं ऊससिअं वि | 2 | 2 | 2 | -- | 2 | 2 |
| 6 | चूतं हर्षितपिककं जीवितसदृशं | -- | -- | -- | 2 | -- | -- |
| 6 | अर्हसि मे चूताङ्कुर दत्तः कामस्य0 | 3 | 3 | 3 | 3 | 3 | 3 |
| 6 | चूतानां चिरनिर्गतापि कलिका | 4 | 4 | 4 | 4 | 4 | -- |
| 6 | रम्यं द्वेष्टि यथा पुरा प्रकृतिभिः | 5 | 5 | 5 | 5 | 5 | 4 |
| 6 | प्रत्यादिष्टविशेषमण्डनविधि0 | 6 | 6 | 6 | 6 | 6 | 5 |
| 6 | प्रथमं साराङ्गाक्ष्या प्रियया 0 | 7 | 7 | 7 | 7 | 7 | 6 |
| 6 | मुनिसुताप्रणयस्मृतिरोधिना0 | -- | 8 | 8 | 8 | 8 | 7 |
| 6 | उपहितस्मृतिरङ्गुलिमुद्रया0 | 8 | 9 | 9 | -- | -- | -- |
| 6 | इतः प्रत्यादिष्टा स्वजनमनुगन्तुं | 9 | 10 | 10 | 9 | 9 | 8 |
| 6 | स्वप्नो नु माया नु मतिभ्रमो0 | 10 | 11 | 11 | 10 | 10 | 9 |
| 6 | तव सुचरितमङ्गुरीय नूनं0 | 11 | 12 | 12 | 11 | 11 | 10 |
| 6 | एकैकमत्र दिवसे दिवसे मदीयं0 | 12 | 13 | 13 | 12 | 12 | 11 |
| 6 | कथं नु तं कोमलबन्धुरा0 | 13 | 14 | 14 | 13 | 13 | 12 |
| 6 | दीर्घापाङ्गविसारिनेत्र0 | -- | 15 | 15 | -- | -- | -- |
| 6 | अस्यास्तुंगमिव स्तनद्वयमिदं0 | -- | -- | 16 | -- | -- | -- |
| 6 | यद्यत्साधु न चित्रे स्मिन्0 | -- | 16 | 17 | 14 | 14 | -- |
| 6 | साक्षात् प्रियामुपगतामपहाय0 | 14 | 17 | 18 | 16 | 16 | 13 |
| 6 | स्विन्नांगुलीनिवेशाद् रेखा0 | 15 | 18 | 19 | 15 | 15 | 14 |
| 6 | कार्या सैकतलीनहंसमिथुना0 | 16 | 19 | 20 | 17 | 17 | 15 |
| 6 | कृतं न कर्णार्पितबन्धनं0 | 17 | 20 | 21 | 18 | 18 | 16 |
| 6 | एषा कुसुमनिषण्णा तृषिता0 | 18 | 21 | 22 | 19 | 19 | 17 |
| 6 | अक्लिष्टबालतरुपल्लव0 | 19 | 22 | 23 | 20 | 20 | 18 |
| 6 | दर्शनसुखमनुभवतः साक्षादिव0 | 20 | 23 | 24 | 21 | 21 | 19 |
| 6 | प्रजागरात् खिलीभूत0 | 21 | 24 | 25 | 22 | 22 | 20 |
| 6 | येन येन वियुज्यन्ते प्रजाः0 | 22 | 25 | 26 | 23 | 23 | 21 |
| 6 | संरोपिते प्यात्मनि धर्मपत्नी0 | 23 | 26 | 27 | 24 | 24 | 22 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 6 | अस्मात् परं बत यथास्मृति0 | 24 | 27 | 28 | 25 | 25 | 23 |
| 6 | आमूलशुद्धसंततिकुलमेतत्0 | 25 | 28 | 29 | -- | -- | 24 |
| 6 | प्रागेव जरसा कम्पः सविशेषेण | 26 | 29 | 30 | -- | -- | -- |
| 6 | तस्याग्रभागाद् गृहनीलकण्ठै0 | 27 | 30 | 31 | -- | -- | -- |
| 6 | अहन्यहन्यात्मन एव ताव0 | 28 | 31 | 32 | 26 | 26 | -- |
| 6 | एष त्वामभिनवकण्ठशोणिता | 29 | 32 | 33 | 27 | 27 | 25 |
| 6 | यो हनिष्यति वध्यं त्वां रक्ष्यं0 | 30 | 33 | 34 | 28 | 28 | 26 |
| 6 | कृताः शरव्यं हरिणा तवासुरा0 | 31 | 34 | 35 | 29 | 29 | 27 |
| 6 | सख्युस्ते स किल शतक्रतोरवध्य | 32 | 35 | 36 | 30 | 30 | 28 |
| 6 | ज्वलति चलितेन्धनो ग्निर्विप्रकृ | 33 | 36 | 37 | 31 | 31 | 29 |
| 6 | त्वन्मतिः केवला तावत् प्रतिपा | 34 | 37 | 38 | 32 | 32 | 30 |

| | **सप्तमोऽङ्कः ।।** | का. क्रम | मै. क्रम | बं. क्रम | दाक्षि. क्रम | देव. क्रम | पुन-र्गठित |
|---|---|---|---|---|---|---|---|
| 7 | अविअगमणं कंचण अण्णं च | 1 | -- | -- | -- | -- | 1 |
| 7 | उपकृत्य हरेस्तस्या भवाल्लंघु0 | 2 | 1 | 1 | 1 | 1 | 2 |
| 7 | अन्तर्गतप्रार्थनमन्तिकस्थं0 | 3 | 2 | 2 | 2 | 2 | 3 |
| 7 | सुखपरस्य हरेरुभयैः कृतं0 | 4 | 3 | 3 | 3 | 3 | 4 |
| 7 | सिध्यन्ति कर्मसु महत्स्वपि0 | 5 | 4 | 4 | 4 | 4 | 5 |
| 7 | विच्छित्तिशेषैः सुरसुन्दरीणां | 6 | 5 | 5 | 5 | 5 | 6 |
| 7 | त्रिस्रोतसं वहति यो गगनप्रति | 7 | 6 | 6 | 6 | 6 | 7 |
| 7 | अयमगविवरेभ्यश्चातकैर्नि0 | 8 | 7 | 7 | 7 | 7 | 8 |
| 7 | शैलानामवरोहतीव शिखराद्0 | 9 | 8 | 8 | 8 | 8 | 9 |
| 7 | स्वायंभुवान्मरीचेर्यः प्रबभूव0 | 10 | 9 | 9 | 9 | 9 | 10 |
| 7 | उपोढशब्दा न रथाङ्गनेमयः0 | 11 | 10 | 10 | 10 | 10 | 11 |
| 7 | वल्मीकार्धनिमग्नमूर्तिरुरग्0 | 12 | 11 | 11 | 11 | 11 | 12 |
| 7 | प्राणानामनिलेन वृत्तिरुचिता0 | 13 | 12 | 12 | 12 | 12 | 13 |
| 7 | मनोरथाय नाशंसे किं बाहो0 | 14 | 13 | 13 | 13 | 13 | 14 |
| 7 | अर्धपीतस्तनं मातुरामर्दक्लिष्ट0 | 15 | 14 | 14 | 14 | 14 | 15 |
| 7 | महतस्तेजसो बीजं बालो यं0 | 16 | 15 | 15 | 15 | 15 | 16 |
| 7 | प्रलोभ्यवस्तुप्रणयप्रसारितो0 | 17 | 16 | 16 | 16 | 16 | 17 |
| 7 | आलक्ष्यदन्तमुकुलान0 | 18 | 17 | 17 | 17 | 17 | 18 |
| 7 | एवमाश्रमविरुद्धवृत्तिना0 | 19 | 18 | 18 | 18 | 18 | 19 |
| 7 | अनेन कस्यापि कुलांकुरेण0 | 20 | 19 | 19 | 19 | 19 | 20 |
| 7 | भवनेषु सुधासितेषु पूर्वं क्षिति0 | 21 | 20 | 20 | 20 | 20 | 21 |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| 7 | वसने परिधूसरे वसाना नियम | 22 | 21 | 21 | 21 | 21 | 22 |
| 7 | स्मृतिभिन्नमोहतमसो दिष्ट्या0 | 23 | 22 | 22 | 22 | 22 | 23 |
| 7 | बाष्पेन प्रतिषिद्धे पि जयशब्दे0 | 24 | 23 | 23 | 23 | 23 | 24 |
| 7 | सुतनु हृदयात् प्रत्यादेशव्यलीक | 25 | 24 | 24 | 24 | 24 | 25 |
| 7 | मोहान्मया सुतनु पूर्व0 | 26 | 25 | 25 | 25 | 25 | 26 |
| 7 | पुत्रस्य ते रणशिरस्ययम्0 | 27 | 26 | 26 | 26 | 26 | 27 |
| 7 | प्राहुर्द्वादशधा स्थितस्य मुनयो0 | 28 | 27 | 27 | 27 | 27 | 28 |
| 7 | आखण्डलसमो भर्ता जयन्त0 | 29 | 28 | 28 | 28 | 28 | 29 |
| 7 | दिष्ट्या शकुन्तला साध्वी0 | 30 | 29 | 29 | 29 | 29 | 30 |
| 7 | उदेति पूर्वं कुसुमं ततः फलं0 | 31 | 30 | 30 | 30 | 30 | 31 |
| 7 | यथा गजे साधुसमक्षरूपे0 | 32 | 31 | 31 | 31 | 31 | 32 |
| 7 | शापादसि प्रतिहता स्मृतिलोप0 | 33 | 32 | 32 | 32 | 32 | 33 |
| 7 | रथेनानुद्धातस्तिमितगतिना0 | 34 | 33 | 33 | 33 | 33 | 34 |
| 7 | तव भवतु बिडौजाः प्राज्यवृष्टि | -- | 34 | 34 | 34 | -- | -- |
| 7 | क्रतुभिरुचितभागांस्त्वं सुरान्0 | 35 | 35 | -- | -- | -- | -- |
| 7 | प्रवर्ततां प्रकृतिहिताय पार्थिवः | 36 | 36 | 35 | 35 | 34 | 35 |

निष्कर्षः—

| अंक | काश्मीरी | मैथिली | बंगाली | दाक्षिणात्य | देवनागरी | पुनर्गठित |
|---|---|---|---|---|---|---|
| 1 | 30 | 33 | 34 | 31 | 30 | 31 |
| 2 | 19 | 19 | 19 | 18 | 18 | 17 |
| 3 | 35 | 40 | 41 | 24 | 24 | 30 |
| 4 | 26 | 26 | 24 | 22 | 22 | 24 |
| 5 | 33 | 34 | 34 | 31 | 31 | 31 |
| 6 | 34 | 37 | 38 | 32 | 32 | 30 |
| 7 | 36 | 36 | 35 | 35 | 34 | 35 |
| योग | **213** | **225** | **225** | **193** | **191** | **198** |

## सन्दर्भ-ग्रन्थसूचिः-

**(क) संस्कृत ग्रन्थाः-**


1. अभिज्ञानशकुन्तलम् । ( बंगाली वाचना का समीक्षित पाठसम्पादन ), सं. रिचार्ड पिशेल, हार्वर्ड युनिवर्सिटी प्रेस, ( प्रथमावृत्ति- 1876, द्वितीयावृत्ति- 1922 )
2. अभिज्ञानशकुन्तलम् । ( चन्द्रशेखर चक्रवर्ती की सन्दर्भ-दीपिका टीका एवं बंगाली पाठ की समालोचना ), सं. वसन्तकुमार म. भट्ट, राष्ट्रीय पाण्डुलिपि मिशन, दिल्ली, 2013
3. अभिज्ञानशकुन्तलम् । ( मैथिल-पाठानुगम् ), ( शङ्कर-नरहरि-कृतव्याख्याद्वयसंयुतम् ), सं. श्री रमानाथ झा, मिथिला विद्यापीठ, दरभङ्गा, ( बिहार ),1957
4. अभिज्ञानशकुन्तलम् । ( अंग्रेजी अनुवाद के साथ ), सं. शारदा रंजन राय, कलकत्ता, 1908
5. अभिज्ञानशकुन्तलम् । ( देवनागरी वाचनानुसारी पाठ ), सं. गौरीनाथ शास्त्री, केन्द्रीय साहित्य अकादेमी, दिल्ली, 1983
6. अभिज्ञानशकुन्तलम् । ( देवनागरी वाचना का शुद्धतर समीक्षित पाठसम्पादन ), सं. पी. एन. पाटणकर, इन्दौर, 1889, 1902
7. अभिज्ञानशकुन्तलम् । ( बंगाली वाचनानुसारि ), ( A Reconstruction of the Abhijnana-sakuntalam ), सं. दिलीपकुमार काञ्जीलाल, संस्कृत कॉलेज, कोलकाता-700073, 1980
8. अभिज्ञानशाकुन्तलम् ( रूपप्रकाशन-नाम-टीकया सहितम् ), सं. डमरुवल्लभ पन्त, कलकत्ता, 1871
9. अभिज्ञानशकुन्तला नाटकम् । ( शारदा-पाण्डुलिपियों में संचरित हुई काश्मीरी वाचना का समीक्षित पाठ-सम्पादन ), सं. वसन्तकुमार म. भट्ट, प्रका. राष्ट्रिय संस्कृत संस्थान, दिल्ली, 2018.
10. अभिज्ञानशाकुन्तलम् । ( किशोरकेलि व्याख्या एवं राष्ट्रभाषानुवाद ), सं. कान्तानाथ शास्त्री तेलंग, चौखम्बा संस्कृत सीरीझ आफिस, वाराणसी, 1960
11. अभिज्ञानशाकुन्तलम् । ( राघवभट्टकृतार्थद्योतनिकया सनाथीकृतम् ), सं. नारायण राम, राष्ट्रिय संस्कृत संस्थान, दिल्ली, 2006
12. अभिज्ञानशाकुन्तलम् । ( काटयवेम-कृत-टीकया सहितम् ), सं. श्रीचेलमचेर्ल रङ्गाचार्य, आन्ध्रप्रदेश साहित्य अकादेमी, हैदराबाद, 1982
13. अभिज्ञानशाकुन्तलम् । ( अभिरामस्य टीकया संभूषितम् ), प्रका. श्रीवाणी-विलास मुद्रणालय, श्रीरंगम्, 1917
14. अभिज्ञानशाकुन्तलम् । ( श्रीनिवासाचार्यकृतटीकया सहितम् ), निर्णय सागर प्रेस, मुंबई, 1966
15. अभिज्ञानशाकुन्तलम् । ( घनश्यामकृतसंजीवनटिप्पणसमेतम् ), सं. पूनम पंकज रावळ, प्रकाशन - सरस्वती पुस्तक भण्डार, अहमदावाद, 1999
16. अभिज्ञानशाकुन्तलम् । ( काश्मीरी वाचना के तथाकथित समीक्षित पाठ के साथ ), सं. एस. के. बेलवालकर, ( डॉ. वी. राघवन् ) साहित्य अकादेमी, दिल्ली, 1965
17. अलंकारमहोदधिः । ( नरेन्द्रप्रभसूरिप्रणीतः ), सं. लालचन्द्र गांधी, गायकवाड ओरिएन्टल सीरीझ-45, वडोदरा, 1942
18. काव्यप्रकाशः ।, सं. सत्यव्रत सिंहः, चौखम्बा विद्याभवन, वाराणसी, पुनर्मुद्रित-2009

19. काव्यमीमांसा ( राजशेखरकृता ), सं. सी. डी. दलाल, ओरिएन्टल इन्स्टीट्युट, वडोदरा, 1934
20. काव्यालंकारसूत्राणि ।, वामनाचार्य-प्रणीतानि ।, सं. बेचन झा, चौखम्भा संस्कृत संस्थान, वाराणसी, चतुर्थ संस्करण, 1989
21. कालिदास ग्रन्थावली, ( हिन्दी अनुवाद के साथ ), अनुवादक एवं सम्पादक- श्रीसीताराम चतुर्वेदी, भारत प्रकाशन मन्दिर, अलीगढ, 1963
22. कालिदास ग्रन्थावली । सं. श्रीरेवाप्रसाद द्विवेदी, बी. एच. यु., वाराणसी, 1986
23. कालिदास ग्रन्थावली । ( हिन्दी अनुवाद के साथ ), सं. श्रीरेवाप्रसाद द्विवेदी, कालिदास अकादेमी, उज्जयिनी, 2008
24. कालिदास-शब्दानुक्रम-कोशः ।, सं. श्रीरेवाप्रसाद द्विवेदी एवं डॉ. सदाशिवकुमार द्विवेदी, कालिदास संस्थान, 28, महामना पुरी, वाराणसी- ( 221005 ), 2017
25. दशरूपकम् । ( धनिककृतावलोकटीकासहितः ), सं. केशवराव मुसलगाँवकर, चौखम्भा प्रकाशन, वाराणसी, चतुर्थ संस्करण, 2009
26. नाट्यशास्त्रम् ( अभिनवभारतीसहितम् ), भाग-1-2-3, गायकवाड ओरिएन्टल सीरीझ-36, 68, 124, ओरिएन्टल इन्स्टीट्युट, वडोदरा, 1992, 2001, 2003
27. पाइअ-सद्द-महण्णवो ( प्राकृत-शब्द-महार्णवः ), सं. हरगोविन्द त्रिकमचंद शेठ, चतुर्थ संस्करण, प्रकाशक- श्रीअरिहन्तसिद्ध सूरि ग्रन्थमाला, लुणावा मंगल भुवन, पालीताणा, 2011
28. प्राकृत-प्रकाशः । ( भामहकृतमनोरमाव्याख्यासहितः ), सं. मथुराप्रसाद दीक्षित, चौखम्भा संस्कृत संस्थान, वाराणसी, वि. सं. 2063 का पुनर्मुद्रण ।
29. प्राकृत-व्याकरणम् ( श्रीसिद्धहेमशब्दानुशासनस्याष्टमोऽध्यायः । ), सं. वज्रसेनविजयजी, श्रीजैन श्वे. मूर्तिपूजक संघ-शिव, मुंबई, 1994, द्वितीयावृत्तिः ।
30. भारतीय प्राचीन लिपिमाला ।, पं. गौरीशंकर हीराचंद ओझा, मुन्शीराम मनोहरलाल, दिल्ली, 1918, ( परिवर्धित तृतीय संस्करण 1959 ).
31. महाभारतम् ( आदिपर्वन् ), सं. वी. एस. सुकथंकर, समीक्षितावृत्ति का प्रथम-भाग, भाण्डारकर ओरिएन्टल रिसर्च इन्स्टीट्युट, पूना, 1933.
32. रसार्णवसुधाकरः । ( सिंहभूपाल-विरचितः ), त्रावणकोर संस्कृत सिरीझ-50, त्रिवेन्द्रम्, 1916
33. वैयाकरणसिद्धान्तकौमुदी ।, सं-अनु. (अस्मद्-गुरवः) श्रीबालकृष्ण पञ्चोलिनः, चौखम्बा संस्कृत सीरीझ, वाराणसी, 1969
34. वैयाकरणसिद्धान्तकौमुदी । सं. गिरिधर शर्मा चतुर्वेदी, मोतीलाल बनारसीदास, दिल्ली, 1971
35. शृङ्गारप्रकाशः ( भाग 1 एवं 2 ), सं. श्रीरेवाप्रसाद द्विवेदी एवं डॉ. सदाशिवकुमार द्विवेदी, प्रका. इन्दिरा गाँधी राष्ट्रिय कला केन्द्र, दिल्ली एवं कालिदास संस्थान, वाराणसी, 2007
36. सरस्वतीकण्ठाभरणम् ।, काव्यमाला सिरीझ, मुंबई, 1924
37. सूक्तिमुक्तावली ( जल्हण-विरचिता ), गायकवाड ओरिएन्टल सिरीझ-85, सं. बी. भट्टाचार्य, एवं श्रीकृष्णमाचार्य ( वडताल, गुजरात ), वडोदरा,1938
38. हर्षचरितम् ( बाणभट्टकृतम् ), सं. पी. वी. काणे, मोतीलाल बनारसीदास, दिल्ली, 1986

**(ख) अंग्रेजी ग्रन्थः-**

1. An Alphabetical Index of Sanskrit Manuscripts in the Government Oriental Manuscripts Library, ( Vol. 1 & 2 ), Ed. S. Kuppuswamy Sastru & P. P. Subrahmanya Sastri, Chennai, Re-printed in 2015
2. Ganaratna-Mahodadhi by Vardhamana ( flourished in 1140 A. D. ), Ed. Julius Eggeling, 1879.
3. Kalidasa Bibliography, Ed. Prof. Satya Pal Narang, Nag Publishers, Delhi, 1975
4. Kalidasa Citations, by Dr. N. R. Subbanna, Meharchand Lachhmandas, Delhi, 1973.
5. Kalidasa : Complete Collection of the Various Readings of the Madras Manuscripts, ( Vol. 1-4 ), Ed. T. Foulkes, Published by the Govt. of Madras, 1904
6. Kalidasa – Lexicon, Ed. By A. Scharpe', published by Rijksuniversiteit Te Gent, De Tempel, Templhof 37, BRUGGE ( Belgie ),1954
7. Le The'atre Indien, Sylvain Le'vi, Emile Bouillon, Libraire, Editeur, Paris, 1890.
8. Priyadars'ika by Harsha, Ed. A. V. William Jackson, Columbia University Press, New York, 1923
9. Sacontala; Or The Fatal Ring : An Indian Drama by Calidas, Translated from the original Sanscrit and Pracrit, by Sir William Jones, 1789.
10. Sakuntala – Prepared for the English Stage by Kedar Nath Das Gupta in a new version written by Laurence Binyon, with an Introductory Essay by Rabindra Nath Tagore, Its Inner Meaning, Published in Mecmillan & Co.Ltd., 1920. ( Reprinted in 1937, 1944, 1945, 1947 & 1953 )
11. The Prakrita_Lakshana OR Chanda's Grammar of Ancient Prakrit, ( Part-1 ) Ed. A. F. Rudolf Hoernel, Calcutta, 1880
12. The Recognition of Shakuntala by Kalidasa, Ed. & Translated by Soma deva Vasu deva, Clay Sanskrit Library, New York University Press, 2006
13. The Text of Shakuntala, by Prof. Balavantaray Thakor, Bombay, 1922
14. The Vidushaka, by G. K. Bhat, The New Order Book Co., Ahmedabad, 1959.

(ग) **हिन्दी ग्रन्थः-**

1. अभिज्ञानशाकुन्तल – कृतिसमीक्षा से पाठसमीक्षा । वसन्तकुमार म. भट्ट, संस्कृत अकादेमी, उस्मानिया विश्वविद्यालय, हैदराबाद, 2010
2. अभिज्ञानशाकुन्तल का पाठपरामर्श । वसन्तकुमार म. भट्ट, आर्य गुरुकुल, माउन्ट आबु, 2016
3. कालिदास अपनी बात ( भारतीय दृष्टि ), श्री रेवाप्रसाद द्विवेदी जी, कालिदास संस्थान, वाराणसी, 2004

4. कालिदास परिशीलन, डॉ. राधावल्लभ त्रिपाठी, संस्कृत विभाग, हरिसिंह गौर विश्वविद्यालय, सागर, 1988
5. कालिदास की समीक्षा परम्परा, सं. राधावल्लभ त्रिपाठी, हरिसिंह गौर विश्वविद्यालय, सागर, 1988

**(घ) पत्रिकाएँ / सामयिकों में प्रकाशित शोध-आलेखः--**

1. एस. के. बेलवालकर ( 1962 ), "निसर्ग-कन्या शकुन्तला", कालिदास ग्रन्थावली, हिन्दी अनुवाद के साथ, परिशिष्ट भाग में प्रकाशित शोध-आलेख, प्रका. भारत प्रकाशन मन्दिर, अलीगढ, सं. 2011 ( ई. स. 1962 ), तृतीय संस्करण, पृ. 59-69.
2. वसन्तकुमार ( 2010 ) म. भट्ट, "अभिज्ञानशकुन्तल – बंगालीवाचना की मौलिकता के समर्थक नवीन प्रमाण" । संस्कृत – विमर्श, ( नवशृङ्खला ), अङ्क – 4, राष्ट्रिय संस्कृत संस्थान, नव देहली, पृ. 147 – 160 ( ISSN – 0975 ), 2010
3. वसन्तकुमार ( 2012 ) म. भट्ट, "अभिज्ञानशाकुन्तल में "अपि च" से सम्बद्ध संक्षेप एवं प्रक्षेप की पहेचान" ।, धीमहि ।, सं. डॉ. दिलीपकुमार राणा, चिन्मय इन्टरनेशनल फाउन्डेशन शोध संस्थान, एरणाकुलम्, अंक-3, 2012.
4. वसन्तकुमार ( 2012 ) म. भट्ट, "पाटण में संगृहीत शाकुन्तल की प्राचीनतर पाण्डुलिपि" ।, हैमप्रपा, हेमचन्द्राचार्य उत्तर गुजरात युनिवर्सिटी, पाटण, अंक-3, ( 2012 ) पृ. 200 से 213, ( ISSN – 2250 – 3064 )
5. वसन्तकुमार ( 2012 ) म. भट्ट, "अभिज्ञानशाकुन्तल के देवनागरी पाठ में संक्षेपीकरण के पदचिह्न" ।, नाट्यम्, सं. श्री राधावल्लभ त्रिपाठी, डॉ. हरिसिंह गौर युनिवर्सिटी, सागर, अंक-71-74 ( पृ. 27 से 57 )
6. वसन्तकुमार ( 2012 ) म. भट्ट, "अभिज्ञानशाकुन्तल में प्रतीकों से व्यञ्जित होनेवाला नाट्यकार्य" । संस्कृत विमर्श, ( नवशृङ्खला ), अङ्क – 7, पृ. 70 – 92, राष्ट्रिय संस्कृत संस्थान, नव देहली ( ISSN – 0975 – 1769 ), 2012
7. वसन्तकुमार ( 2014 ) म. भट्ट, "हंसपदिका-गीत एवं भ्रमर का प्रतीक", संस्कृत मञ्जरी, ( वर्ष-12, अंक- ) दिल्ली संस्कृत साहित्य अकादेमी, दिल्ली, ( पृ. 89 से 101 )
8. वसन्तकुमार ( 2014 ) म. भट्ट, "अभिज्ञानशाकुन्तल के पाठविचलन की आनुक्रमिकता" ।, नाट्यम्, सं. श्री राधावल्लभ त्रिपाठी, डॉ. हरिसिंह गौर युनिवर्सिटी, सागर, अंक- 76, ( पृ. 26 से 54 )
9. वसन्तकुमार ( 2015 ) म. भट्ट, "अभिज्ञानशाकुन्तलम् : देवनागरी एवं दाक्षिणात्य वाचनाओं की पाठालोचना" ।, नाट्यम्, सं. श्री राधावल्लभ त्रिपाठी, संस्कृत विभाग, डॉ. हरिसिंह गौर युनिवर्सिटी, सागर, अंक- 77, ( पृ. 33 से 58 )
10. वसन्तकुमार ( 2015 ) म. भट्ट, "कुसुमशयना शकुन्तला : अभिज्ञानशाकुन्तल ( अंक-3 ) के पाठविचलन का क्रम", संस्कृत विमर्श ( नवशृङ्खला अंक-10 ), राष्ट्रिय संस्कृत संस्थान, दिल्ली, ( पृ. 109 से 144 ) 2015

11. वसन्तकुमार ( 2015 ) म. भट्ट, "कालिदास एवं विक्रमादित्य" – नवोन्मेश । विक्रम, विक्रम युनिवर्सिटी, उज्जयिनी, कालिदास स्पेश्यल नंबर – 17, 2015

12. वसन्तकुमार ( 2015 ) म. भट्ट, "शारदा पाण्डुलिपियों में शकुन्तला के श्लोकों में वृद्धि-ह्रास का विश्लेषण " ।, संबोधि ।, सं. डॉ. जितेन्द्र शाह, एल. डी. इन्स्टीट्युट ओफ इन्डोलोजी, अहमदावाद, अंक-38, पृ. 50 से 69 )

13. वसन्तकुमार ( 2016 ) म. भट्ट, "हेमचन्द्राचार्य के प्राकृत व्याकरण में अभिज्ञान-शाकुन्तलम्" ।, सम्बोधि । ( अंक-39 ), सं. डॉ. जितेन्द्र बी. शाह, एल. डी.इन्स्टीट्युट ऑफ इन्डोलोजी, अहमदावाद, ( पृ. 90 से 97 ) 2016

14. Belvalkar ( 1923 ) S. K.; The Application of a few canons of textual & Higher Criticism to Kalidasa's S'akuntala, Published in Asia Major, Leipzig – 2 (1), 1923, pp. 79-104.

15. Belvalkar ( 1925 ) S. K.; The Original Sakuntala, Published in Sir Asutosh Mookherjee Silver Jubilee Vol. 3, Orientia part-2, Calcutta, 1925, pp. 349 –359

16. Belvalkar ( 1929 ) S. K.; S'ringaric Eloboration in S'akuntala – Act-3, Published in Indian Studies in Honor of C. R. Lanman, Harvard University Press, 1929, pp. 187-192.

17. Belvalkar ( 1949 ) S. K.; Kalidasa's Abhijnanas'akuntala – it's Dramatic Setting, Published in Vikrama Volume, Scindia Oriental Institute, Ujjain, 1949, pp. 45 – 55.

18. Belvalkar ( 1950 ) S.K.; Entracte to Act-7, ( = Natak and Nartan ), by Bulletin of Deccan College Research Institute, Poona, Vol. 20, 1950, pp. 19-24.

19. Belvalkar ( 1969 ) S. K.; The Art of Text-editing and Textual Criticism in Sanskrit Literature, Published in Our Heritage, 1969, Vol. 17, pp. 41-49.

*---- 888 ----*